# वीरप्रतापनाटकम्







श्रीमथुराप्रसाददीक्षितः

# वीरप्रतापनाटकम् ।



श्रीसर्वतन्त्रस्वतन्त्रैस्साहित्याचार्यैस्सोलनराजगुरुभिः
श्रीमहामहोपाध्यायैर्विद्यावारिध्यादिपदालङ्कृतैः
पण्डितमथुराप्रसाददीक्षितै-
र्विरचितम्



तच्चेदं

लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः

**मोतीलाल बनारसीदास**

इत्येतैः स्वीये 'मुम्बई संस्कृत' इत्याख्ये
मुद्रणालये सम्मुद्राप्य
प्रकाशितम्



द्वितीयं संस्करणम् ५०० ]   १९२९   [ मूल्यमेका मुद्रा

# प्राक्कथनम्

अस्तीदं वीरप्रतापनाटकं परमशौर्यशालिनः शिशोदियाकुलोद्भूतस्य श्रीमहाराणाप्रतापनायकस्य । स च प्रतापः कीदृक् शौर्यसाहससहिष्णुतागुणसंपन्न आसीदिति नातितिरोहितं भारतीयप्रज्ञावताम् । आर्यपतिना येन विराट्साम्राज्याधिपतेरकबरस्याधिपत्यमस्वीकृत्य सुरक्षिताऽऽर्यमर्यादा, स्थिरीकृतं च स्वाधिपत्यमित्यादि सकलोऽपि वृत्तान्तोऽस्मिन्नाटके उपनिबद्धः । नाद्यत्वे प्रायशो भरतप्रणीतनियमानुबद्धानि नाटकानि विद्वद्भिर्निर्मीयन्ते इति न तानि नाटकश्रेण्यां परिगण्यन्ते, अत एव कतिपयैः पाश्चात्यकोविदैर्नाद्यत्वे संस्कृतभाषायां महाकाव्यानि नाटकानि वा भारतीयबुधैर्निर्मीयन्त इति संस्कृतभाषाया अकिञ्चित्करतां समर्थयमानैरिदं नाटकमवलोक्य संतुष्यताम्, प्रमुद्यतां च भरतोक्तनियमानुसृत्यैव निर्मितं वीररसात्मकमिदं नाटकमित्यवगत्य गुणग्राहिभिर्विपश्चिद्भिरिति ।

महामहोपाध्याय मथुराप्रसाददीक्षितः

श्रीः

इदं वीरप्रतापनाटकमार्यपतिमहाराणाप्रतापसिंहस्येति
'रत्नं समागच्छतु काञ्चनेन' इति सिद्धान्तमाश्रित्य
परमसदाचारसंपन्नस्य शौर्यौदार्यसहिष्णुतादि-
गुणयुक्तस्य दानवदलदलनप्रमारवंशावतंसस्य
सम्यगधीतव्याकरणसाहित्यशास्त्रस्य सं-
स्कृतविपश्चित आदर्शक्षत्रियस्य श्री-
धर्ममार्तण्डराजाधिराजदुर्गा-
सिंहस्य करकमले
समर्प्यते ।

सर्वतन्त्रस्वतन्त्र-विद्यावारिधि—
महामहोपाध्याय—मथुराप्रसाददीक्षितः

# FOREWORD

The following pages represent the labours of a modern writer in the field of Sanskrit Drama. Though the attempt may not claim to be unique, even in these days of comparative neglect of ancient Indian language and classics, it certainly reflects a great credit on the author. The earliest history of the growth of drama in the pre-christain centuries in India is shrouded in mystery, but from a survey of its subsequent history it appears that Indian drama, unlike Greek drama in the early ages or Elizabethan drama in mediaeval England, had its own course of evolution and developed its own canons and technique. Several varieties of dramatic composition, both Rupakas and Uparupakas, are recognised and illustrated in Sanskrit literature, and though these cover a wide area of subjects and constructive art and though some of them do depart from the standard fixed by literary traditions, they can in no wise be described as the expression of an unrestricted freedom of the author's imagination. Present-day compositions have to conform to the canons of dramatic art to an even greater extent. The genius of the author can find scope for exhibiting itself, not usually in over-riding these bonds of traditional propriety but in utilising them as instruments of a larger self-expression.

The author, MM. Pandit Mathura Prasad Dīkṣita, writes Sanskrit with a facile pen and commands a style, which combines elegance with power. He has tried to depict in the present work the extraordinary qualities of the great Rajput hero, Rana Pratāp Sinha of Mewar, and there is no doubt that he has greatly succeeded in making his picture as vivid as possible. The name of Rana Pratāp has been a household word, not only in Rajputana but in the whole of educated India, thanks to the immortal researches of the late lamented Col. Tod and of his illustrious followers. His patriotism, his love of freedom, the nobility and dignity of his moral character, his great bravery, his unbounded zeal and religious fervour, and above all his unusual sacrifices in the cause of his country and countrymen—these are the never failing sources of inspiration to patriotic youths and have as a matter of fact fired the imagination of hosts of writers and readers of north Indian vernaculars. The author has done well in making Sanskrit his medium, as it is calculated to have the effect of enriching modern Sanskrit drama as well as of making available the story of the great hero to a wider circle of young Indian readers. I hope the work will have the publicity and appreciation it deserves.

Benares
November, 1937.

**MM. Gopi Nath Kaviraj M. A.**
*Retired Principal,*
*Goverment College,*
BENARES.

## श्रीविश्वनाथः शरणम् ।

पण्डितकुलप्रकाण्डेन महामहोपाध्यायश्रीमथुराप्रसाददीक्षितमहोदयेन विरच्य्य प्रकाशितं वीरप्रतापाभिधं गीर्वाणवाङ्मयं नवीनं नाटकं समवलोक्य महान्तं खलु सन्तोषमवाप्तवानस्मि । पूज्यपादभरतमुनिप्रभृतिभिरलङ्कारशास्त्राचार्य्यैः समुपदिष्टां दृश्यकाव्यनिर्माणपद्धतिं सम्यगनुसरताऽप्यनेन दीक्षितमहोदयेन स्वदेशसनातनधर्माभ्युदयमेकान्तेनाभिलषतां नव्यशिक्षितानां भारतीययुवजनानां मानसोल्लासकरान् नवीनान् भावान् नाटकेऽस्मिन् यथापात्रं माधुर्य्यप्रसादगुणोल्लासितया विशुद्धयाऽमरभारत्या समुपवर्णयता समाविष्कृतमात्मनो महत् पाण्डित्यं देशकालानुयायिव्यवहारविज्ञानसमलङ्कृतमसाधारणं सुकवित्वं च । सुपरिशुद्धरसभावालङ्कारगुणरीतिप्रकर्षसमुज्ज्वलं नवीनमेतद् दृश्यकाव्यं गीर्वाणवाणीमयातिविस्तृतमहार्हरत्नकोषे समुपहृतवतोऽस्य महाकवेर्नवीनोऽयं समुद्यमः सर्वेषां सहृदयानां विपश्चितां मनोऽनुरञ्जनकारी प्रशंसनीयश्चेति नात्र कस्यापि विदुषो विप्रतिपत्तिरिति मे दृढः प्रत्ययः । तत् प्रार्थये श्रीश्रीविश्वनाथचरणकमलयोः प्रसादेनायं विद्वत्कुलवरेण्यो महामहोपाध्यायदीक्षितमहोदयः सौख्यातिशयेन निरुपद्रवं शतं समा जीवन् गीर्वाणवाणीसेवनेन सर्वथा साफल्यं सम्पादयतु भारते भूदेवकुले स्वस्य जन्मन इति विज्ञापयति—

महामहोपाध्याय श्रीप्रमथनाथ तर्कभूषण शर्म्मा
Director of Oriental Learning
Benares Hindu University.

श्रीशश्शरणम्

श्रीमत्प्रतापचरितन्नाटकेनोपवर्णितम् ।
विलोक्यामोमुदं काव्यगौरवाद्यत्पुरातनम् ॥ १ ॥
नूत्नङ्कृत्वेव कविना प्रत्यक्षमिव दर्शितम् ।
मन्ये भवेदुपकृतिर्म्महती छात्रसंसदि ॥ २ ॥
महाविद्यालयाध्यक्षैरालोच्यास्य निवेशनात् ।
परीक्ष्यग्रन्थनिचयेऽध्ययनादस्य सर्वथा ॥ ३ ॥
नव्योत्साहवतां देशोद्धृतयेऽधिष्ठितात्मनाम् ।
अन्ते निवसतामेतन्नियतञ्जनयेन्मुदम् ॥ ४ ॥
तस्मादेतस्य सर्वत्र प्रचाराय मनीषिभिः ।
यतितव्यमिति प्रह्वो मुकुन्दो भृशमीहते ॥ ५ ॥

महामहोपाध्याय बक्शी श्री मुकुन्द झा, काशी ।

श्रीः ।

महामहोपाध्यायश्रीमथुराप्रसाददीक्षितमहोदयैः साहित्याचार्यैर्निबद्धं वीरप्रतापाभिधं नाटकं मयाऽवलोकितम् । संस्कृतनाटकानिर्माणं नामातिदुष्करं कर्म, 'नाटकान्तं कवित्वम्' इति प्रसिद्ध आभाणकः । तत एवास्मिन् काले संस्कृतनाटकनिर्माणं निरुद्धप्रायमेव । अतिविरला एव नाटकग्रन्था अस्मिन् काले निबध्यन्ते । तदेवंविधे व्यतिकर ईदृशविशुद्धसंस्कृतप्राकृतमयनाटकनिर्माणे साफल्यमुपलभ्य संस्कृतविद्वत्समाज आदरणीयतां गता दीक्षितमहाभागा इत्यत्र नास्ति संशयः । संस्कृतप्रौढिरिव प्राकृतप्रौढिरपि दीक्षितमहाभागानां प्रशंसार्हा । नाटकाङ्गनिर्वहणमपि कालोपयोगि सम्यगवधानेनात्र कृतम् । आशासे-नाटकस्यास्य समुचितेनादरेण भविनां ग्रन्थकर्तॄणामुत्साहवर्धने दत्तावधानः स्यात्संस्कृतज्ञसहृदयसमाज इति ।

महामहोपाध्यायः गिरिधरशर्म्मा चतुर्वेदः ।
( जयपुरमहाराजसंस्कृतकालेजाध्यक्षः )

—

सोलनमहिपालमौलिमालास्यन्दमानमकरन्दबिन्दुसुन्दरैर्महामहोपाध्यायश्रीमन्मथुराप्रसाददीक्षितमहाशयैर्विरचितं वीरप्रतापनाटकमवलोकमानस्य मे मानसं परमानन्दमनुविन्दति । इह हि प्रधानध्वनितां दधानो वीररस इतरैरङ्गताङ्गतै रसैः परिपोषमापितश्छायातिशयं जनयति । तदनुकूलतया तावदौचित्यचारुतामञ्चति पाञ्चालीप्रभृती रीतिः । क्वचन च शैथिल्यमास्थितोऽपि बन्धोऽभिधेयविशेषोपनिबन्धनप्रभावाद् व्यञ्ज-

नाव्यापारेण क्रोधं बोधयन् स्तोकतोऽपि न भजते परिपन्थितां स्थायिभावस्य, प्रत्युत समर्पयति साहाय्यम् ।

प्रायेण प्रभूतेषु पद्येषु गुणीभावितात्मानः शब्दार्थालङ्कारा निश्शङ्कं लोकोत्तरचमत्कारकारणशेमुषीविषयमर्थं द्योतयन्ते ।

तत्तत्पात्रोचितप्राकृतवचोवैचित्र्यमिदानीन्तनान्यतिशेते नाटकानि ।

क्वाचित्कं सङ्गीतकमभिनयेषु सुषमामातनिष्यति नितराम् ।

यथास्थानं समावेशिताः सन्धिविष्कम्भकपताकास्थानकनाट्यालङ्कारप्रभृतयो निवेदयन्ते नाट्यानुशासननिष्णाततां निर्मातुः ।

निर्वहणे चरमं च पद्यमात्मसात्करोति हृदयमुदारभावभाजाम् । अत एवास्य प्रशंसनीयतायां नैव मनागपि समुन्मिषति विप्रतिपत्तिरिति

महामहोपाध्यायबालकृष्णमिश्रः
व्याकरणाचार्य-साहित्याचार्यः

14-2-38

Principal, College of Oriental Learning
Benares Hindu University.

---

महामहोपाध्यायविद्वत्तल्लजानेकग्रन्थविरचननदीष्णपण्डितश्रीमथुराप्रसाददीक्षितैरुपज्ञातं वीररसप्रख्यापनपटीयोऽपि सकलरसानिबन्धशबलितं, प्रसादौदार्यगुणयोगि, सकलसन्धिबन्धबन्धुरं, भरताचार्यनिर्दिष्टरूपकनिरूपणवीथिप्रचारोच्चावचचाटुवाक्यविन्यासललितं, नानावृत्तिसमन्वयहृद्यं, साहित्यव्याकृतिलक्षणलक्षितं, रसपरिपोषमहनीयं, वीरप्रतापाभिख्यं नाम नाटकमस्माभिरवलोकितं, बहुलं परीक्षितञ्च ।

एतन्नाटकनिर्मित्या दीक्षितमहोदयैः सुरभारत्याः सौभाग्यं प्रकामं परां काष्ठां प्रापितमिति विदितमेव भवेदत्र संस्कृतप्राकृतात्मकस्वर्णादीक-

लिन्दकन्यापुण्यसङ्गमतीर्थेऽवगाहनमासादयतामनुभवरसिकानां रसभावविदामिति—

**श्रीगुरुप्रसादशास्त्रिणः**

व्याकरणाचार्य, न्यायाचार्य, दर्शनाचार्य,

श्रीराजस्थान संस्कृत कालेज, मीरघाट, बनारस सिटी।

——

श्रीमन्महामहोपाध्यायसोलनराजगुरुविद्वद्वरश्रीमथुराप्रसाददीक्षितैर्विरचितं वीरप्रतापनाटकमहमपठम्। अस्य नाटकस्य सरससरला कविता ग्रन्थकर्तुर्न केवलं साहित्यमार्मिकत्वमपि तु भाषाप्रभुत्वमपि द्योतयति। चरित्रचित्रणे ग्रन्थकृता साधु साफल्यमधिगतमिति नात्र मात्रयाऽपि सन्देहः।

कथावस्त्वप्यत्रैतिहासिकमतिरुचिकरं युवजनाशिक्षाप्रदं सर्वादरणीयं श्रीप्रतापचरितं विद्यते-इति स्वर्णसौरभायितमिदम्।

चिरात् कालप्रभावात् सर्ववाङ्मयोपजीव्ये संस्कृतवाङ्मये नवीनं वस्तूपजीव्यनवसाहित्यविनिर्माणं निरुद्धमिव तिष्ठति, परं श्रीमन्तो महामहोपाध्याया रूपकमिदमुद्भाव्य संस्कृतवाङ्मयस्य श्रीवृद्धिं कृतवन्त इति यत्सत्यं धन्यवादमर्हन्ति।

आशास्यते ग्रन्थरत्नमिदं सर्वत्र विश्वविद्यालयेषु पाठ्यक्रमे विनियोज्यमानमुचितं सम्मानमासादयेत्।

एतद्ग्रन्थरसास्वादमनुभवन्नहं नात्र व्याकरणादिसम्बन्धि कीदृग्विधमपि स्खलितमपश्यम्।

इति सम्मनुते

**परमेश्वरानन्दः शास्त्री**

साहित्याचार्य ऋषिकुलस्नातकः

Principal Sanatan Dharm Skt. College Lahore.

श्रीमहामहोपाध्यायराजगुरुकविपण्डितप्रवरमथुराप्रसाददीक्षितैरुपनिबद्धं प्रस्फुरद्रसम्, रसभावानुबन्धिपदबन्धबन्धुरम्, रीत्यलङ्कारादिकृतवैचित्र्यरुचिरम्, अदोषम्, आहितान्तःपरितोषम्, वीरप्रतापाख्यं नाटकं परिशील्यमानं कस्य वा सहृदयस्य हृदयोल्लासाय न जायेत। विशेषतश्चाद्यत्वे विच्छिन्ने सुरभारतीप्रबन्धबन्धानुबन्धे नव्यभव्यं दृश्यकाव्यमिदमभ्युदितमाकलय्य वा सुरगवीसेविनो मानसममन्दोत्तरङ्गं न संपद्येत।

भाषा सुरभारती, काव्यम् अभिनेयार्थम्, रसो वीरः, बन्धश्च व्यपगतच्युतसंस्कारादिदोषसम्बन्धः प्राप्तकाव्यगुणानुबन्ध इति यत्सत्यं महतीयमुत्कर्षसाधनपरम्परा पराप्ता।

तदहं सुरसरस्वतीतीर्थेषु विपाश्चिद्वरेषु नवनवप्रबन्धबन्धप्रवृत्तिप्रोत्साहनाय संस्कृतपरीक्षापाठ्यक्रमेऽस्य प्रबन्धस्य निवेशम्, अन्यत्र चापि भूयांसं प्रचारं कामयेतराम्।

रामचन्द्रः 'कुशलः' शास्त्री बी. ए.
Oriental College, Lahore.

---

श्रीमद्भिर्महामहोपाध्यायैः श्रीमथुराप्रसाददीक्षितैः प्रणीतं प्रतापनाटकं मयाऽऽमूलचूलम्पर्यदर्शि। तेन च नितरामुल्ललास मे चेतः। बहोः कालान्निरुद्ध इवाभवत्संस्कृतसाहित्यस्य विशेषतश्च दृश्यकाव्यग्रन्थानां प्रवाहः, सोऽनेन नूनमापावृतः। नाटकेऽस्मिन् यत्र तत्र सन्निविष्टानां पद्यानां निरूपणीयेनाभिनवेन विषयेण रसभावादिभिश्च काऽप्यपूर्वैव च्छटा सम्पन्ना। ओजोगुणभूयिष्ठतया च तत्रत्यानि गद्यान्यपि सुतरामावर्जयन्ति पाठकजनानां मनांसि।

अयमत्रापरो विशेषः—यदस्मिन् च्युतसंस्कृत्यादयो दोषा लेशतोऽपि न सन्ति सोऽयं सुवर्णे सुगन्धः।

ग्रन्थरत्नमिदं भारतीयानां विद्यापीठानां परीक्षासु पाठ्यविषये चेन्नियतं भवेद् तदा विद्वत्समाजस्य चिराच्छिरसि रूढो गुणग्राहिता-विरहाख्यो दोषोऽपि वात्याव्राताघातमध्यवर्ति कर्पूरखण्डमनुहरेत् ।

व्याकरणतीर्थ—**जगदीशशास्त्री ।**

ओरियण्टल कालेज लाहौर ।



# नाटकपात्राणि ।

१ प्रतापसिंहः—

२ सालुम्ब्र–अद्यापि सलूमरनाम्ना प्रसिद्धं सामन्तस्थानम् ।

३ चूडावत्–प्रधानमन्त्री । उदयसिंहस्य-प्रतापसिंहस्य स एव जातः ।

४ जगन्मल्लः–उदयसिंहस्य लघुपुत्रः ।

५ वेश्या–तपोबलाद्योगिनी जाता

६ पुरोहितः–रामगुरुः ।

७ रावत कृष्णसिंहः–प्रतापमातुलः

८ शक्तिसिंहः–प्रतापसिंहभ्राता ।

९ कर्णः-प्रतापभ्राता ।

१० भद्रमुखः–प्रतापचरः ।

११ शोणिः–रामगुरुपुत्रः ।

१२ कुमारः–अमरसिंहः प्रतापसिंहपुत्रः ।

१३ भिल्लराजः–भिल्लाधिपतिः ।

१४ मन्नासिंहः–झालावार-राज्याधिपतिः ।

१५ रुद्रसिंहः–प्रतापसैनिकः ।

१६ सामन्त–इन्द्रपुराधिपः ।

१७ भिल्लः ।

१८ भिल्ली ।

१९ भामागुप्तः–भामाशाहनाम्नाप्रसिद्धः कोशाध्यक्षः ।

१ अकबरः—

२ मुहम्मदः–अकबरस्य गुप्तचराधिपतिः ।

३ मानसिंहः–अकबरस्य प्रधानसेनापतिर्जयपुराधीशः ।

४ सगरसिंहः–प्रतापसिंहभ्राता ।

५ सलीमः–अकबरसुतः ।

६ पृथ्वीसिंहः–वीकानेर कुमारःअकबरसामन्तोऽपि प्रतापपक्षपाती ।

७ शाहवाजः–अकबरसेनापतिः ।

१० मन्त्री

११ वैरामखां सेनापतिः ।

१२ महावत

ऐतिहासिकमिदं नाटकमिति पात्रसंख्याऽगत्याऽधिका संजाता ।

श्रीः

# वीरप्रतापनाटकम् ।

## प्रथमोऽङ्कः ।

सूत्रधारः—

या प्रत्यूहपतङ्गसङ्घदहने दीप्रप्रदीपायते
या चिन्तामणिकल्पपद्ममणिभास्युद्यत्कदम्बायते ।
या चाज्ञानतमःसमूहहरणे भास्वन्मयूखायते
सा विष्णोश्चरणारविन्दसुषमा विष्वक् प्रतापायते ॥१॥
यत्कृपालवमात्रेण मूकोऽप्यायाति वाग्मिताम् ।
स एव देवदेवेशः शंकरः शं करोतु नः ॥ २ ॥

( नान्द्यन्ते )

आज्ञप्तोऽहं विद्वत्परिषदा, यदद्यत्वे भारते देशे हीनदीनदशामापन्नानां वीराणां शौर्यसाहससहिष्णुतागुणोद्द्योतनाय परां काष्ठामापदां भजमानानां पौर्वकालिकक्षत्रियाणां शौर्यधैर्याद्यभिनयेनाधुनिकभाविनवयुवकेषु शौर्यधैर्यादिगुणसंपादनाय, प्रसादनिर्णयरत्नाकराभिधानराजेन्द्रादिविविधग्रन्थनिर्मातृमथुराप्रसाददीक्षितप्रणीतेन अभिनवेन वीरप्रतापनाटकेनोपस्थातव्यमिति प्रतिपात्रं विधीयतां यत्नः । अस्तु । तावन्नटीमाह्वयामि ।

( नेपथ्याभिमुखमवलोक्य ) आर्ये ! इतस्तावत् ।

नटी—अज्ज ! इयं म्हि ।

आर्य ! इयमस्मि ।

( ततः प्रविशति गायन्ती नटी । )

हंसट्ठाणं करडो लहइ बुहो तं ण को वि वारेइ ।
हंसस्थानं करटो लभते बुधस्तं न कोऽपि वारयति ।
पियसारंगबलायाकदम्बएहिं हठाउ नीसरिओ ॥३॥
पिक-सारङ्ग-बलाकाकदम्बकैः हठान्निःसारितः ॥३॥

सूत्रधारः—

आर्येऽनया तु गीत्या मे मेवाडं नीयते मनः ।
प्रतापांशं यत्र गृह्णन् ( इत्यर्धोक्ते एव )

( नेपथ्ये )

आः, क एवं मयि स्थिते ममांशं गृह्णाति ।

सूत्रधारः— जगत् कृष्णेन वारितः ॥ ४ ॥

( इति ब्रुवन् निष्क्रान्तः सनटीकः सूत्रधारः । )

प्रस्तावना ।

ततः—

मद्भागहरणबुद्धिर्गर्वप्रध्वस्तभागधेयो मे ।
कोपानले पिपतिषुर्धावति को यमपुरीं गन्तुम् ॥ ५ ॥

( इति पठन् प्रविशति सालुम्बसहितः प्रतापः । )

प्रतापः—( इतस्ततोऽवलोक्य )

आम् ! ज्ञातम् । पित्रा जगन्मल्लाय राज्यं दत्तम् । तदेवोद्दिश्य केनाप्युच्यते । ( अथ किंचित्परिक्रामन् पठति । )

किं स्वातन्त्र्यकृते स्वबान्धवजने हेतिर्मया गृह्यतां
किं वा स्वं विषयं विहाय विपिनं शान्त्या समासेव्यताम् ।

संघर्षात्स्वजनेषु दास्यपदवीं मा गात् प्रजा मेऽधुना ।
बाढं वा मरणं भवेन्मम न तु स्यान्म्लेच्छदृष्टा धरा ॥ ६॥
किमौर्ध्वदैहिकं कृत्यं पितुः पूर्वं विधीयताम् ।
किं वा देशपरित्याग इति दोलायते मनः ॥ ७ ॥

( इति विमृशन् पुनरितस्ततः परिक्रामति । )

(सालुम्बमभिलक्ष्य ) आः पश्य, प्रधानमन्त्रिसमन्वितो जगन्मल्ल इत एव वितानप्रदेशेऽभिवर्तते । अत आवां दूरस्थितौ वृत्तान्तरितौ भूत्वा पश्यावः—'किमसौ विदधाति ।' ( इति तथा कुरुतः । )

( ततः प्रविशति वितानप्रदेशे विट-चेटक-चूडावत्प्रधानमन्त्रिसमन्वितो जगन्मल्लः । अथ सर्वे यथास्थानमुपविशन्ति )

प्र० मन्त्री—महाराज ! ज्ञातिदेशप्रथानुरोधेन पूर्वं राज्यपीठाधिरोहणं विधाय अभिषेकानन्तरमेव पितुरौर्ध्वदैहिकं कर्त्तव्यम् ।

विटः—युज्यते चैवम् । अतो राज्याभिषेकोत्सवे पूर्वं द्राक्षी सुरा आनीयताम्, सहैव गणिका च ।

जगन्मल्लः—चेट ! युक्तमुक्तं विटेन, अतस्त्वरितमेव राज्याभिषेकोत्सवानुरूपं सर्वं सम्पाद्यताम् ।

चेटः—जं देवो आणवेदि ।

यद् देव आज्ञापयति ।

( ततः सुरामादाय गणिकया सह मार्गे गच्छति चेटः । )

चेटः—अयि माउले !

अयि मातुलि !

अज्ज रज्जुच्छवे तुज्झ धणं दावेमि जं बहु ।
अद्य राज्योत्सवे तुभ्यं धनं दापयामि यद् बहु ।
तयद्धभागो अम्हाणं तुम्हे त्ति पडिवज्जह ॥ ८ ॥
तदर्धभागोऽस्माकं यूयमिति प्रतिपद्यध्वम् ॥ ८ ॥

वेश्या—यथा तुभ्यं रोचते ।

( ततः सुरामादाय गणिकया सह गच्छन्तं चेटं विलोक्य विलपति प्रतापः । )

प्रतापः—

आः कुर्वन्ति दिवं गतस्य मदिरां पीत्वा किमूर्ध्वक्रियां
हा धिङ् मां वसुधे ! पिधेहि दुरयं स्वाङ्के चिरं मा कृथाः ।
यत्तातः क्रिययाऽनया मलिनया सद्धार्मिकाणां वरो
देवत्वादपनाय्य जीवति मयि प्रेतत्वमापाद्यते ॥ ९ ॥

( इत्युद्विग्नमना दीर्घमुच्छ्वसिति । )

( आकाशे )

प्रताप ! धैर्यमवलम्बस्व । भगवदाराधनतत्पराणामौर्ध्वदैहिकं नैवंविधैः क्रियते ।

( ततः सुरामादाय गणिकया सह प्रविशति चेटः, सर्वे यथास्थानमुपविशन्ति, सुरां पिबन्ति च । )

प्रतापः—( दूरतस्तदवलोक्य, स्वगतम् । ) हन्त ! कथं देवा अपि विप्रलम्भकाः संवृत्ताः—

सुरां पिबन्नेव मदीयबान्धवो
ध्रुवं चरिष्यत्ययमौर्ध्वदैहिकम् ।
न राज्यलोभात्स्वजनेष्वसिं वहे
सहेय दुष्कर्म कथं वतेदृशम् ॥ १० ॥

विटः—अहो शोभनेयं सुरा, मधुरमदोन्मादिनी च ।

चेटः—सुराओ अम्हाणं माउलाणी अइसोहणा ।
सुरातोऽस्माकं मातुलानी अतिशोभना ।

( ततः प्रविशति कर्मकाण्डकोविदैरनुगम्यमानः पुरोहितः । )

मन्त्री—जगन्मल्ल ! ससामग्रीकः पुरोहितः समुपस्थितः । अतो राज्याभिषेककार्यमारभ्यताम् ।

चेटः—( सखेदं सनिर्वेदं च नीचैः स्वरेण । )

कुद्दो सालपुत्तो समुवट्ठिओ।
कुतः श्यालपुत्रः समुपस्थितः।

जग०—यथा भवतामनुमतिः। ( वेश्यादय एकतोऽपसर्पन्ति। )

मन्त्री—पुरोहित ! राज्ये जगन्मल्लोऽभिषिच्यताम्।

पुरो०—यथाऽऽज्ञापयन्ति भवन्तः, परं तु—
( इति मौनमास्थितः। )

मन्त्री—विस्रब्धं ब्रूहि, यदपरं वक्तव्यम्।

पुरो०—इदमपरम्, यद् राज्ये ज्येष्ठपुत्रस्यैवाधिकारः, न च केनापि कारणेन प्रतापमनधिकारिणं तर्कयामः।

मन्त्री—यदा महाराजेन उदयसिंहेन जगन्मल्लाय राज्यमदायि, तदा कथमिदं नोक्तम् ?

पुरो०—महाराजं मरणासन्नमवलोक्य तदात्मनो व्यर्थमेव क्लेश-संपादनाय नोक्तम्। निर्धारितं चैतत्, यत्स्वत एवानन्तरं युक्तमेव भविष्यति।

किञ्च—साँगाभटानन्तरमेव वीर-
श्चेदग्रहीष्यज्जननं प्रतापः।
जगद्गुरुर्भारतभूमिरेषा
स्वातन्त्र्यमाप्स्यत्सकला तदानीम्॥ ११॥

नेपथ्ये—

साधु पुरोहित ! बृहस्पतिमते ! साधु। एवमेवैतत्।

( ततः प्रतापमादाय प्रविशति झालारावग्वालियरनरेशादिप्रधान-भटैः समन्वितो रावतकृष्णः। )

रावतकृष्णः—मन्त्रिन् ! राज्ये कस्याधिकारः ? प्रतापस्य जगन्मल्लस्य वा ? को वाऽनयोर्योग्यः ?

मन्त्री—उदयसिंहमहाराजेन जगन्मल्लाय राज्यं दत्तम्।

रा० कृष्णः—( सक्रोधमिव ) कस्मै दत्तमिति न पृच्छ्यते। किं तु कस्याधिकारो ? योग्यता चेति ?

मन्त्री--प्रतापस्यैव ।

रा० कृष्णः—तर्हि स एवाभिषिच्यताम्, युष्माकं तु न काचिदत्र विप्रतिपत्तिः ?

मन्त्री--परं तु स न स्वीकरोतीति श्रुतम् ।

रा० कृष्णः--कथं न स्वीकरिष्यति ?

मन्त्री—यदि स स्वीकुर्यात्तर्हि 'स्वर्णे सुगन्ध' इत्यहं मन्ये । एवं हि सति चिरमार्यगौरवं स्थास्यति ।

( ततः प्रतापाभिमुखाः सर्वे उपतिष्ठन्ते । )

रा० कृष्णः--प्रताप ! केयं भवतोऽनुदारता
रणाद्भिया कातरतामथाचरन् ।
न नाम चेत्सार्थयसे ततो वयं
क्व याम कं वीरमुपाश्रयेम वा ॥ १२ ॥

सालुम्ब्रः—रणाङ्गणेऽनारतमुत्सवप्रियं
साँगाह्वयं तं स्वपितामहं स्मरेः ।
म्लेच्छाधिपादार्यगुरुत्वरक्षणे
यदीययत्नः सफलत्वमाययौ ॥ १३ ॥

प्रता०—( पुनरुत्तरार्द्धं पठति ) 'संघर्षात्स्वजनेष्वित्यादि' )

ग्वालियरनरेशः—कोऽयमस्थाने उद्वेगः । कथं नाम स्वजनेषु संघर्षः, त्वमेवास्य देशस्याधिपतित्वे योग्योऽसीत्यस्माभिः सर्वैर्मन्यते ।

जातोऽहंपूर्विकायामतिसुभटगणो धैर्यशौर्यादियुक्तो
म्लेच्छानां यश्चमूनां युधि शिरसि पतन्खड्गशस्त्तद् व्यधत्त ।
सूरं भित्त्वा स सर्वः प्रलयमुपगतो नैव निघ्नत्वमाप्तो
युष्माभिर्गौरवं तद् यवनरणभिया हेलया नाश्यते किम् ? ।१४।

प्रतापः—नाहं रणाद् बिभेमि। यदि मदायत्तैव आर्याणां गौरवस्य रक्षेति भवतां निश्चयस्तदाऽहं सर्वस्वत्यागेनापि तद् रक्षिष्यामीति प्रतिजाने।

सर्वे—साधु साधु! स्ववंशधरोचितमेव प्रतिज्ञातम्।

मन्त्री—अथेदमप्यस्माकं वक्तव्यम्, यन्मेवाडदेशाधिपतित्वे नहि नहि आर्याधिपतित्वे भवतामेवाधिकार इति अत्रभवन्तं भवन्तमेवाभिषिषिक्षामः।

प्रतापः—यथा भवद्भ्यो रोचते।

(ततो रावतकृष्णग्वालियरनरेशप्रभृतयः प्रतापं सिंहासने उपवेशयन्ति, पुरोहितश्चाभिषिञ्चति।)

पुरो०—

आर्यस्थितीनां परिरक्षणार्थमसिव्रते त्वामभिषेचयामः।
विजित्य शत्रूनखिलां स्वगोत्रां गोत्रानुगां संप्रतिपालयेथाः॥१५॥

(इत्याशिषं ददाति।)

(ततो देशकुलाचारानुरूपं सर्वे उपायनान्युपहरन्ति।)

(अथ वैतालिकौ प्रविशतः।)

प्रथमः—राजंस्त्वत्सुभटासिकृत्तयवनासृङ्मांसमज्जाकुल-
त्रस्तव्यूहपलायनार्तनिनदव्याप्ताः समाः स्युर्दिशः।
निःशङ्कप्रसरन्मनोज्ञविभवभ्राजिष्णुलक्ष्मीलस-
त्त्वत्कीर्तिप्रसरावदातमखिलं भूमण्डलं भासताम्॥१६॥
प्रत्यर्थिक्षोणिपालप्रसृमरतरुणध्वान्ततिग्मांशुमाली
दुर्धर्षक्ष्माभृदालिप्रमथनमघवा दुर्नयाम्भोदवातः।
सन्न्यायव्रातवल्लीविपिनघनघटाप्रौढधाराधरोऽयं
जीयादार्यस्थितीनां यवनपतिनयाद्रक्षकः श्रीप्रतापः॥१७॥

द्वितीयः—विद्वेषिभूमिपतिमानविमर्ददक्षो
म्लेच्छाधिनाथबलकुञ्जरयूथसिंहः ।
आर्यप्रभुः समरविज्ञसभाधुरीणो
मेवाडराड् जयतु युद्धकलाप्रवीणः ॥ १८ ॥

समस्तहिन्दुरक्षणे क्षणे क्षणे कृतेक्षणः
क्षमाधिनायकश्च यः क्षमास्वरूपतां दधौ ।
कलाकलापकोविदो रणाग्रणीर्दयानिधिः
प्रतापसिंहभूपतिः स एष सर्वदा जयेत् ॥ १९ ॥

प्रतापः—( वाराङ्गनामवलोक्य ) केयम् ?

प्रधानमन्त्री—महाराज ! इयं नर्तितुमागता वाराङ्गना ।

प्रतापः—आः ! किमनया ?

लुण्टन्ती विषये स्वके युवजनान् व्यामोह्य रूपं धनं
वंशस्योपरि नर्तनं विदधती हीना विनिस्सार्यताम् ।
स्थानेऽस्याः परिपन्थिपार्थिववधूवैधव्यदीक्षाक्षमो
युद्धे वीरधुरंधरस्य भवतः खड्गो नरीनृत्यताम् ॥ २० ॥

किञ्च—

लुञ्चन्तीं स्वप्रदेशेऽधिगतपरधनान् वंशमध्ये व्रजन्तीं
शून्ये हस्तौ क्षिपन्तीं क्षितिशिरसि रयादुत्पतन्तीं पतन्तीम् ।
निस्सार्यैनां ममैषा परविषयगतां संपदामालुटन्ती
मूर्ध्नोऽरीणां हरन्ती पततु रिपुकुलस्योत्तमाङ्गेऽसिधारा ॥ २१ ॥

( इति स्वकीयं खड्गं निष्काश्य दर्शयति । ततः सा वेश्या किञ्चिदपसरति । )

प्रतापः—( भूमिं स्पृष्ट्वा प्रणमति प्रतिजानीते च । )

यावन्मे धमनीमुखेषु रुधिरक्लेदोऽपि सन्तिष्ठते
मांसं वाऽस्थनि तिष्ठति क्वचिदपि प्राणाः शरीरे स्थिताः।
तावन्म्लेच्छपतेः कथंचिदपि न प्राप्स्याम्यहं निघ्नताम्
स्वातन्त्र्यस्य पदं समस्तवसुधां नेतुं यतिष्ये भृशम्।२२।

( सर्वे शस्त्राण्युद्यम्य )

सर्वे—एवं सति वयं सर्वे त्वदायत्तजीवनाः ।

किञ्च—

घर्मबिन्दुरपि यत्र शरीरात्तावकान्निपतितः समरे स्यात् ।
तत्र शोणितभवाः शतशः स्युः प्रत्यनीकपृतनासु तटिन्यः ।२३।

वेश्या—( सभयं पुनरुपेत्य )

महाराज ! क्षमस्व माम् । अद्य प्रभृति अहं काषायवसना योगिनीवेषेण भिक्षामाचरन्ती शौर्यसंचारिगानबलेन सहस्रशो वीरान् देशसेवार्थं सज्जीकरिष्यामि, कातराणामपि हृदयेष्वतिप्रबलं शौर्यं संचारयिष्यामि, नातः परं भवद्राज्ये कोऽपि कातर उपलप्स्यते । ( इति पादयोः पतति । )

प्रता०—उत्तिष्ठ, देशसेवार्थमेवमेव विधेहि ।

नेपथ्ये

साधु साधु ! सर्वे भवन्तो दृढसंकल्पाः सन्तु ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके प्रथमोऽङ्कः ।

---

# द्वितीयोऽङ्कः ।

( ततः प्रविशति पितुरौर्ध्वदैहिकनिवृत्तः कर्णद्वितीयः सुखासीनः प्रतापः । )

प्रतापः—क इदानीं द्वारि तिष्ठति ।

दौवारिकः—( प्रविश्य ) जेदु जेदु महाराश्रो ।

जयतु जयतु महाराजः ।

प्रता०—शक्तिसिंहं भ्रातरमाह्वय ।

दौ०—जं देवो श्राणवेदि ।

यत् देव आज्ञापयति ।

( इति निष्क्रान्तः । पटीक्षेपः )

दौ०—( शक्तिसिंहमुपसृत्य ) महाभाय ! तत्थ महाराश्रो भायरं

महाभाग्य ! तत्र महाराजो भ्रातरं

सत्तिसीहं दट्ठुं अहिलसइ ।

शक्तिसिंहं द्रष्टुमभिलषति ।

शक्ति०—दौवारिक ! तिष्ठ किंचित्कालम्, यावदहं सालुम्बं पितरं पृष्ट्वा समागच्छामि ।

दौ०—जहा तुम्हाणं श्राणा ।

यथा युष्माकम् आज्ञा ।

(शक्तिसिंहः स्वप्राणरक्षकं पितरं सालुम्बमुपसृत्य प्रणम्य चोपविशति । )

सालुम्बः—( निर्वर्ण्य ) वत्स ! शक्तिसिंह !

प्रफुल्लपाथोजसमुज्ज्वलद्द्युति-
विशालनेत्रातिविकासभासुरा ।
कमप्यपूर्वं सुखसंपदागमं
मुखप्रभा ते ब्रुवतीव शोभते ॥ १ ॥

शक्ति०—एवमेवैतत् । यदत्र समुपस्थितो दौवारिकः । निवेदयति यथा महाराजः प्रतापो भ्रातरं शक्तिसिंहं द्रष्टुमभिलषतीति । तत्र भ्रातरमिति त्रीण्यक्षराणि मम हृदये कामप्यानन्दलहरी-मुल्लासयन्ति ।

सालु०—गच्छ, किमतः परमपरं सुखस्थानं भविष्यति । अथवा तिष्ठ, अहमेव त्वां नेष्यामि ।

( शक्तिसिंहमादाय सालुम्बो राजद्वारि उपतिष्ठते । )

दौ०—(प्रविश्य) जेदु जेदु महाराओ, सत्तिसीहसहिओ सालुम्बो
जयतु जयतु महाराजः, शक्तिसिंहसहितः सालुम्वः
समुवट्ठिओ ।
समुपस्थितः ।

प्रतापः—( कर्णमुद्दिश्य ) त्वं तावन्ममास्थानिकायां सालुम्बतातं शक्तिसिंहं चोपवेशय । अहमिदमावश्यकं पत्रमिन्द्रपुर-नरेशाय लिखित्वा समागच्छामि । त्वमपि तावत्तत्रैव तिष्ठेः ।

( कर्णो निर्गत्य सालुम्बं प्रणम्य, शक्तिसिंहं चालिङ्गय यथोक्तमनुतिष्ठति । )

( शुद्धविष्कम्भः )

कर्णः—भ्रातर्दिष्ट्या दृष्टोऽसि । तस्मिन्दिने तां पितुराज्ञामुपश्रुत्य मे मनसि महानुद्वेगः संजातः, अहं तु त्वदीयां शौर्यसाहसश-क्तिमवलोक्य संजातरोमहर्षो विकसितनयनश्चाभूवम् । को नाम त्वदतिरिक्तस्तथाभूतां शौर्यसाहसपदवीमारोढुं शक्नुयात् ।

शक्ति०—लौहकारसमर्पितः खड्गः पित्रा तूलराशौ परीक्षार्थं निपातितः । मया तु युक्तमेवाभिहितम्—यदस्य प्रयोजनं शत्रुशरीरे भविष्यति, अतः समानवस्तुनि परीक्षा कर्तव्या । अत एव स्वाङ्गुलिं छित्त्वा परीक्षितोऽसिः । परं तु न जाने पितुः किमर्थं दारुणः क्रोधः संजातः ।

कर्णः—हृदयदौर्बल्यात्स ते साहसं द्रष्टुमपि नापारयत् । आः ! को नाम स्वसुते तथाविधमाज्ञापयेत् । तदयमस्थाने क्रोधः ।

शक्ति०—ममादृष्टमेव कारणम्, न किमपि पूज्येषु तेषु वक्तव्यम्।

सालुम्बः—नैवम्–अस्त्यत्र कश्चिद् गूढाभिसन्धिः, यत्केनापि दैवज्ञेन विज्ञापितमासीत्त्वत्पित्रे, यदस्य शक्तिसिंहस्य कृते स्वजन्मभूमेर्हानिर्भ्रातुः प्राणरक्षा च संपत्स्यते, इति तद्भयादेनं हन्तुं समयमवलोकयन्निव स स्वसमीपे तद्विधानमौद्धत्यं मन्यमानस्तथा विज्ञापितवान्।

कर्णः—एतावदपराधात्तत्सन्देहमात्रतश्च स्वसुते तथाभूताज्ञापनं कथं संभवति।

सालु०—अन्यदपि, विचारितं तेनासीत्-यज्जगन्मल्लाय राज्यप्रदानसमयेऽतिशयितविक्रमशौर्यसाहसशोभमानोऽयमेव मे परिपन्थी भविष्यतीति।

कर्णः—युज्यते चैवम्। ततस्ततः?

सालु०—ततः प्रतिज्ञाय कथंचित्प्रतिबोधितः, नायं तवाज्ञायाः प्रतिकूलमुपस्थास्यतीति।

कर्णः—ततस्ततः?,

सालु०—ततो मयोक्तम्। निस्संतानोऽहमित्येनं मह्यं देहीति यथाकथंचित्तेनायं दत्तः।

(ततः प्रविशति दौवारिकद्वितीयः प्रतापः। सर्वे उत्तिष्ठन्ति। प्रतापः सालुम्बं प्रणमति, शक्तिसिंहं च हृदयेन आलिङ्गति। पुनर्यथास्थानं सर्वे उपविशन्ति।)

प्रतापः—शक्तिसिंह! दिष्ट्या सालुम्बेन रक्षितोऽसि। अयं ते प्राणरक्षकः पिता।

चाण्डालहस्तेषु समर्पितं त्वां
को नाम निष्काशयितुं समर्थः।
धैर्यक्षमाशालिमनाः प्रवीरः
सालुम्बतातो यदि नान्तरा स्यात्॥२॥

शक्ति०—एवमेवैतत्।

प्रता०—सालुम्ब ! भवान् किमाज्ञापयत्येनम् ?

सालु०—( मनसि ) ममौरसः पुत्रः संजात एव, अयमत्र स्थितः परमैश्वर्यभोक्ता भवतु।

( प्रकाशम् ) अयं ते स्थापनिका। यथा भवद्भ्यो रोचते।

प्रता०—अयमस्मत्सविधे स्थितोऽस्मदीयसव्यबाहुरिव सर्वकार्येषु सहायको भवतु।

सालु०—एवं सति

दृप्यद्द्विपत्क्षितिपालसैन्य—
समुद्रकुम्भोद्भव उग्रशक्तिः।
तिष्ठेत्सहायस्तव चेत्तदाऽयं
कियान् वराको यवनाधिपः स्यात् ॥३॥

प्रता०—एवं चेन्मदभिन्नशरीर एवासावास्ताम्।

प्रसादेऽस्मिन् दश ग्रामांस्तुभ्यं सारण्यसीमकान्।
प्रयच्छामि भवद्वंश्या भुञ्जतामायुगक्षयम् ॥४॥

सालु०—अनेन तवौदार्येण यावद् वंशपरंपरा क्रीतोऽस्मि।

शक्ति०—महाराज ! श्रूयते राज्यलोभात्सगरसिंहो म्लेच्छराजमनुगतः।

प्रता०—आः ! कोऽयं वराकः। गच्छतु, किमनेनापह्रियते।

शक्ति०—स्नानकालातिपातः संजातः। तथाहि—

तापं संजनयन् दिशः कवलयंस्तर्षं समुत्कर्षयन्
दृष्टिं संभ्रमयन्मनो विकलयन् स्वेदाम्बु संचारयन्।
भूमिं संज्वलयन्नपोऽपचययन् पान्थान्समुत्सारयन्
छायां वामनयन् मृगांस्तरलयन् भास्वान् समुज्जृम्भते ॥५॥

प्रता०—अहो, कथानुकथनेनाज्ञात एव मध्याह्नः संजातः।

( ततः सर्वे उत्तिष्ठन्ति। सालुम्बशक्तिसिंहकर्णा निष्क्रामन्ति। )

प्रतापः—( किञ्चित्परिक्रम्य निःश्वस्य च अकबरं लक्ष्यीकृत्य। )

रे म्लेच्छाधिप ! दुर्विनीत ! फलितः कौटिल्यजालाकुलो
दिष्ट्या रूढपदस्त्वया विरचितो भेदप्रयोगः स्वतः ।
यल्लोभोपहतस्त्वदीयशरणं मद्बान्धवोऽप्याश्रितो
मर्यादामपहाय पूर्वपुरुषायातां श्ववृत्त्या स्थितः ॥६॥

दौवारिकः—( प्रविश्य ) जेदु जेदु महाराओ । आगराणयरा आयादो
जयतु जयतु महराजः । आगरानगरात् आयातो
भद्दमुहणामा चारणो दुआरि चिट्ठइ
भद्रमुखनामा चारणो द्वारि तिष्ठति ।

प्रता०—( मनसि ) मन्ये तन्नगरवृत्तपरिज्ञानाय प्रेषितश्चरोऽयम् ।
( प्रकाशम् ) प्रवेशय ।

( ततः प्रविशति तेन सह दौवारिकः । )

प्रता०—दौवारिक ! स्वनियोगमशून्यं कुरु ।

( निष्क्रामति दौवारिकः । )

प्रता०—भद्रमुख ! स्वगमनात्प्रभृति कथय आगरानगरवृत्तान्तम् ।

भद्रमु०—सुणोदु महाराओ । पुव्वं अकबरेण अप्पाणं आरियं
श्रणोतु महाराजः । पूर्वमकबरेण आत्मानमार्य
छत्तिअं संपादइउं बम्हणा कहिया । तओ तेहिं बम्हणेहिं
क्षत्रियं सम्पादयितुं ब्राह्मणाः कथिताः । ततस्तैर्ब्राह्मणैः
कहियं । पुव्वकम्मणो पहावेण जहा राया वा धणिओ
कथितम् । पूर्वकर्मणः प्रभावेण यथा राजा वा धनिको
वा रंको वा होइ, एव्वं चेव पुव्वकम्मणो पहावेण बम्हणो
वा रङ्को वा भवति, एवमेव पूर्वकर्मणः प्रभावेण ब्राह्मणो
वा छत्तिओ वा सुद्दो वा होइ । पुव्वकम्माणुगयां णिच्चां
वा क्षत्रियो वा शूद्रो वा भवति । पूर्वकर्मानुगतां नित्यां
जाइं ण को वि परावट्टिउं समत्थो ।
जातिं न कोऽपि परावर्तयितुं समर्थः ।

प्रता०—साधु साधु ! विद्वद्भिर्युक्तियुक्तं शास्त्रमर्यादानुगतमेवोक्तम् । ततस्ततः ?

भद्र०—तओ तेहिं बम्हणेहिं कहियं, जहा तुमं दाणप्पहावेण राया
ततस्तैर्ब्राह्मणैः कथितं; यथा त्वं दानप्रभावेण राजा
भूओ एव्वं चेव विवेअपरिच्चाएण कपूआयरणेण मिलिच्छो
भूतः, एवमेव विवेकपरित्यागेन कपूयाचरणेन म्लेच्छो
जाओ, अओ पुव्वकम्मप्पहावस्स विज्जमाणत्तेण अणेण
जातः, अतः पूर्वकर्मप्रभावस्य विद्यमानत्वेन अनेन
सरीरेण छत्तिओ ण होइस्ससि ।
शरीरेण क्षत्रियो न भविष्यसि ।

प्रता०—साधु साधु ! अद्यापि निःस्पृहाः सत्यैकनिष्ठा ब्राह्मणाः सन्ति । ततस्ततः ?

भद्र०—तदो जदा बहुभअलोहप्पदंसणेण वि बम्हणा ण सत्थविमुहा
तदो यदा बहुभयलोभप्रदर्शनेनापि ब्राह्मणा न शास्त्रविमुखा
जाआ तदा अकबरो छत्तिएहिं सह संबंधिउं उज्जुत्तो।
जाताः, तदा अकबरः क्षत्रियैः सह संबन्धुमुद्युक्तः ।
तत्थ वि ण केण वि संबंधिउं पडिण्णाअं किं तु जयपुर-
तत्रापि न केनापि संबन्धुं प्रतिज्ञातम्, किं तु जयपुर-
राएण माणसीहपिउणा भगवाणदासेण अप्पणो भइणी
राजेन मानसिंहपित्रा भगवानदासेन आत्मनो भगिनी
दिन्ना । तओ आरभिय माणसीहो सेणाहिवई जाओ ।
दत्ता । तत आरभ्य मानसिंहः सेनाधिपतिर्जातः ।
सो य अण्णेहिं छत्तिएहिं तस्स जउणस्स कण्णगाओ
स च अन्यैः क्षत्रियैः तस्मै यवनाय कन्यकाः
दावेइ ।
दापयति ।

प्रता०—( सोद्वेगम् )

रे मानसिंह ! पतितोऽसि किमार्यवृत्ते-
नीचानुवृत्तिजधनान्निधनं गरीयः ।
मानं विहाय यदि जीवसि तर्हि नार्यो
लोकास्त्वदीयचरितानि कथं स्मरेयुः ॥ ८ ॥

ततस्ततः ?

भद्र०—तओ इओ रज्जलोहाओ विणिक्कंतो सअरसीहो
तत इतो राज्यलोभाद्विनिष्क्रान्तः सगरसिंहो
मिलिच्छाहिरायं उवगओ ।
म्लेच्छाधिराजमुपगतः ।

प्रता०—श्रुतमेतत् । ततस्ततः ?

भद्र०—तओ तेण भोदीयपयायणवट्टमाणो सअलो वि वुत्तंतो
ततस्तेन भवदीयप्रजाजनवर्तमानः सकलोऽपि वृत्तान्तः
कहिओ, तं सोऊण पडिण्णायं मिलिच्छराएण ।
कथितः, तं श्रुत्वा प्रतिज्ञातं म्लेच्छराजेन ।
तुमं चेव मेवाडदेसाहिवइं करिस्सामि त्ति ।
त्वामेव मेवाडदेशाधिपतिं करिष्यामीति ।

प्रता०—( सक्रोधम् ) आः का शक्तिः प्रतापे मयि जीवति ?
ततस्ततः ?

भद्र०—तओ सो सयरसीहो तव्वयणं बहु मण्णंतो अप्पाणं
ततः स सगरसिंहस्तद्वचनं बहु मन्यमानः आत्मानं
तअट्ठे समप्पियवंतो । तअणु मिलिच्छाहिराएण
तदर्थे समर्पितवान् । तदनु म्लेच्छाधिराजेन
चित्तोरप्पदेसस्स दुग्गो तस्स दिण्णो ।
चित्तोरप्रदेशस्य दुर्गस्तस्मै दत्तः ।

प्रता०—( सगरसिंहं लक्ष्यीकृत्य )

रे क्षत्रियापसद ! मूढमते ! श्ववृत्ते !
नीचाश्रितोऽसि परिहाय किमार्यधर्मम् ।

नाहं तव स्मृतिपथं समुपागतः स्या-
मात्मीयतातचरितं तु कथं स्मृतं नो ॥ ८ ॥
ततस्ततः ?

भद्र०—तओ को वि भट्टो तत्थ समुवट्ठिओ, सो क्खु मिलिच्छाहिवइं
ततः कोऽपि भट्टस्तत्र समुपस्थितः, स खलु म्लेच्छाधिपतिं
दट्ठूण विचित्तं चेव कज्जं अकारिसी ।
दृष्ट्वा विचित्रमेव कार्यमकार्षीत् ।

धरिऊण कच्छमज्झे उत्तारिय मत्थगाउ तुअ दिन्नं ।
धृत्वा कक्षमध्ये उत्तार्य मस्तकात्त्वया दत्तम् ।
सिरवेढ्णअं भट्टो वंदंसी अकवरं तत्थ ॥ ९ ॥
शिरोवेष्टनकं भट्टः अवन्दिष्टाकवरं तत्र ॥ ९ ॥

एअं दट्ठूण सव्वे वि अचरिअसमाउला जाआ । तओ
एतद् दृष्ट्वा सर्वेऽपि आश्चर्यसमाकुला जाताः । ततो
रण्णा पुच्छियं, कम्हा उसणीसं उत्तारिय वंदसि त्ति । तओ
राज्ञा पृष्टम्, कस्मादुष्णीषमुत्तार्य वन्दसे इति । ततो
भट्टेण कहिअं, एअं खु उसणीसं महाराअपदावस्स, सो
भट्टेन कथितम्, एतत्खलु उष्णीषं महाराजप्रतापस्य, स
क्खु कं वि ण वंदइ । एअं उसणीसं मज्झ सिरसि
खलु कमपि न वन्दते । एतदुष्णीषं मम शिरसि
तस्स चेव । तेण परितुट्ठेण मह दिन्नं । तुराओ गेहम्मि
तस्यैव । तेन परितुष्टेन मह्यं दत्तम् । त्वरातो गृहे
ण उत्तारियं । तओ तस्स उसणीसं ण वंदउ त्ति काऊण
नोत्तारितम् । ततस्तस्योष्णीषं न वन्दतामिति कृत्वा
सिरसो उत्तारियं । तओ किंचि कालं सो तत्थ ठिओ
शिरस उत्तारितम् । ततः किंचित्कालं स तत्र स्थितः
पुणो विणिक्कंतो ।
पुनर्विनिष्क्रान्तः ।

प्रता०—ततस्ततः ?

भद्र०—तअणंतरं किंचिसेणासहिओ सगरसीहो चित्तोरदुग्गं
तदनन्तरं किञ्चित्सेनासहितः सगरसिंह-(श्चित्रपुर) श्चित्तोरदुर्गं
समुवागओ, अम्ह इत्थ आगओ म्हि। अओ परं भवंतो
समुपागतः, अहमत्रागतोऽस्मि। अतः परं भवन्तः
पमाणं।
प्रमाणम्।

प्रता०—साधु साधु ! ( ततो भद्रमुखो निष्क्रान्तः, प्रतापश्चिन्तयाति। )

रे रे कातर ! दुर्विनीत ! कुमते ! भेदैकवाचस्पते !
मद्दुर्धर्षणवीरविक्रमभिया किं लीयसेऽभ्यन्तरे ?
गेहेशूर ! ममैव वन्धुमपरं योद्धुं नियुङ्क्षे यत-
श्चित्तोरं तु न रक्षितुं प्रभवसि क्रुद्धात्प्रतापात्स्वयम् ॥१०॥

( पुनर्विचिन्त्य )

सगरसिंहस्यास्मद्बान्धवस्यैवाधिकारे चित्तोरदुर्गं इति नाहं याव-त्सगरसिंहं तं परावर्तयिष्ये।

तत्परावर्तने वंशे वैरवह्निः समुज्ज्वलेत्।
दोषश्च वन्धुघाते स्यात् तत्ततो विरमो वरम् ॥ ११ ॥

( अथोपतिष्ठते दौवारिकः। )

दौवा०—जेदु जेदु महाराओ।
जयतु जयतु महाराजः।
सालुम्बसत्तिसीहकण्णराउतकन्हपुरोहियप्पभिदओ दुवारि
सालुम्बशक्तिसिंहकर्णरावतकृष्णपुरोहितप्रभृतयो द्वारि
समुवट्ठिया। तत्थभवंतं दट्ठुं अहिलसन्ति।
समुपस्थिताः। तत्रभवन्तं द्रष्टुमभिलषन्ति।

( प्रतापः स्वयं द्वारि समुपतिष्ठते। सर्वान्सानुनयं प्रवेशयति 'विजयता-

मेकलिङ्गेश्वर' इति परस्परमभिव्रुवन्ति । ततो यथास्थानं सर्वे उपविशन्ति ।)

प्रता०—( सानुनयम् ) कथमनुगृहीतोऽयं जनः ।

पुरोहितः—राज्यपीठाधिरोहणानन्तरं प्रथमपर्वसंप्राप्तौ आखेटार्थं गन्तव्यमित्येष कुलाचारः, तत्राखेटलाभालाभाभ्यां भाविशुभाशुभकल्पनं क्रियते । अतोऽद्य भवद्भिराखेटार्थं गन्तव्यमिति ।

प्रता०—( सोत्कण्ठम् ) समुद्यतोऽस्मि ।

( ततः सर्वे द्वारि समुपतिष्ठन्ते । )

प्रता०—दौवारिक ! चेतकाश्वं सज्जीकर्तुमश्वपरिचारकमादिश ।

दौ०--जं देवो आणवेदि ।

यद्देव आज्ञापयति ।

( इति निष्क्रम्य अश्वपरिचारकमादिश्य यथास्थानं स्थितः । अश्वपरिचारको मन्दुरातश्चेतकाश्वं निष्क्रमयति । )

सालुम्ब्रः—अत्युत्तमोऽयं चेतकाश्वः, महाराज !

हरेर्हयेभ्यो हरितां परिक्रमे विनिर्गतोऽयं किमु चेतको हयः ।
हरित्सवर्णो हरिवंशनायकं भवन्तमाराधयितुं समागतः ॥१२॥

शक्ति०—महाराज ! चलाचलमस्य प्रोथमवलोकयतु ।

कथं क्षमायाः क्षणमात्रतः क्रमे
भवेन्नु मे सिद्धिरितीव चिन्तयन् ।
चलाचलप्रोथतयैव मारुता-
त्मजस्य मन्त्रं जपतीव सन्ततम् ॥ १३ ॥

रावतकृष्णः—महाराज ! पश्य तावदस्य चेष्टाम्,

पदे समुत्थाप्य तव द्विषो गलं
ग्रहीतुमिच्छन्निव खं चरन्नयम् ।
निलीनमेनं क्वचिदप्यनाश्रयं
धरातले मार्गयितुं समीहते ॥ १४ ॥

( ततः प्रतापश्चेतकम्, अन्ये च स्वं स्वमश्वमारुह्य वनमभिगच्छन्ति । )

( पटीक्षेपः । )

( आखेटमाचर्य एकत्रोपविशन्ति । )

( ततः प्रविशति आरण्यकप्रबन्धकः सेनापतिः । )

सेनापतिः—जयतु जयतु महाराजः ।

प्रता०—कथय आरण्यकानां वृत्तान्तम् ।

सेना०—

त्वदीयमाखेटकयानमेते ज्ञात्वैव भीताः सहजं विरोधम् ।
हित्वा समुद्विग्नहृदः समस्ताः पलायिता वन्यमृगाश्चरन्ति ।१५।

किं बहुना—

एकोऽसौ द्विजराजमध्यमहितः स्वस्थो मृगो मोदते
बर्हीं शक्तिधरस्य राजति सुखी हंसो गिरः शोभते ।
शेते शैलसुता हरिर्गजमुखः क्रीडत्युमाङ्कान्तरे
यान्त्यन्ये भयतो दिशोऽपि विदिशः सर्वेऽप्यरण्योद्भवाः ।१६।

एवं च भवत्प्रतापसमुद्वेजितकिरितरक्षुशार्दूलकण्ठीरवलुलायखड्गिजम्बुकगौधेरशल्यवृककुरङ्गचीनचमूरुशम्बरगवयशशादिभिर्भयादितस्ततो भ्रमद्भिः क्रूराहिंस्रकसत्त्वैः समन्ततो व्याप्तमिवारण्यमिदानीं प्रतीयते ।

प्रतापः—तर्हि तेषां संशोधनाय पुनरप्यस्माभिः प्रयतितव्यम् ।

सालुम्बकर्णशक्तिप्रभृतयः—अवश्यमेव ।

( ततः प्रतापसहिता आरण्यकानां संशोधनार्थं सर्वे अरण्ये प्रविशन्ति । )

( पटीक्षेपः )

( इत आगरानगरे स्थितः समस्तभारतसाम्राज्यलिप्सया अकबरश्चिन्तयते । )

अकबरः—काश्मीराङ्गकलिङ्गवङ्गमरुभूत्सौराष्ट्रकर्णाटका
मत्स्यः केरलकेकयान्ध्रमगधाः पाञ्चालगान्धारकौ ।

मद्रः कोशलकच्छगुर्जरभुजाः सौवीरसिन्ध्वादयः
सर्वे मे वशगाः परं लघुतमो नाद्यापि मेवाडकः ॥१७॥

अस्तु—जितः कर्णाटको येन स मानो मानिनां वरः ।
अल्पादपि हि संमानान्मेवाडं नाशयिष्यति ॥१८॥

( पुनर्विचिन्त्य )

आः! दुर्जयः प्रतापः । तदीयसैनिका अपि स्वस्वभुजदण्ड-खण्ड्यमानासंख्यतरक्षुशंवरपञ्चाननसूकराः परमोत्कृष्टसाहस-शौर्याखर्वदर्पशोभमानाः स्वभूमिरक्षणदृढव्रताः सन्ति । जीवत्सु च तेषु कथमसौ जय्यः ।

( ततः प्रविशति दौवारिकः । )

दौवारिकः—जेदु जेदु महाराश्रो ।

जयतु जयतु महाराजः ।

विक्कमसीहणामा इंदजालिश्रो दुआरि चिट्ठइ ।

विक्रमसिंहनामा ऐन्द्रजालिको द्वारि तिष्ठति ।

अक०—( मनसि विचिन्त्य ) आम्, ज्ञातम् । मुहम्मदनामा विश्वस्तो विद्वान् स्वभृत्योऽसौ प्रतापवृत्तपरिज्ञानाय ऐन्द्रजालिकवेषेण प्रेषितः ।

( प्रकाशम् ) प्रवेशय, तावदिन्द्रजालदर्शनेनैव मनो विनोदयिष्यामः ।

दौवा०—जं देवो आणवेदि ।

यद् देव आज्ञापयति ।

( निष्क्रम्य पुनस्तेन सह प्रविशति । )

अक०—दौवारिक ! त्वमपि स्वनियोगमशून्यं कुरु ।

( इति दौवारिको निष्क्रान्तः । )

अक०—मुहम्मद ! अथवा अलं नामोद्घाटनेन, ऐन्द्रजालिक ! कथय प्रतापवृत्तान्तम् ।

ऐन्द्र०—इत उदयपुरं मयि प्राप्ते प्रतापः कर्णसालुम्ब्रशक्तिपुरोहिता-

दिभिः सहाखेटार्थं निष्क्रान्तः। अहमपि तत्प्रजामात्मानं ख्यापयन् वागुरिकवेषेण तेन सहैव निष्क्रान्तः।

अक०—साधु साधु! युक्तो वेषोऽङ्गीकृतः। ततस्ततः?

ऐन्द्र०—ततः प्रतापसालुम्बशक्तिसिंहादिभिरन्यैश्च सामन्तसुभटैः क्वचिद्विशिखैः क्वचिदसिभिश्च आखेटो विहितः। बहुशश्च सिंहशार्दूलवराहादयो निपातिताः।

अक०—श्रुतमेतत्पर्यन्तम्। ततस्ततः?

ऐन्द्र०—ततो बहून् सिंहादीन् विनिपात्य प्रतापशक्तिपुरोहितादयो विश्रमितुमेकत्र स्थिताः, अहमपि दूरत एकत्र स्थाने स्थितः।

अक०—ततस्ततः?

ऐन्द्र०—

अत्रान्तरे घुर्घुरघोररावी
कोलः समुद्वेजितसैन्यचक्रः।
जङ्घान्तरेऽश्वान् शतशो विदार्य
प्रतापशक्त्योर्नयनाग्रगोऽभूत् ॥१९॥

अक०—( सहर्षमिव ) ततस्ततः?

ऐन्द्र०—ततः—

आकर्णमाकृष्य बलेन बाणं
कोलेऽक्षिपत्तीक्ष्णफलं प्रतापः।
विभिद्य लक्ष्यं स परैरलक्ष्यो
ऽविशद्विलम्बत्रपयेव भूमिम् ॥२०॥

अक०—( विमनस्क इव ) ततस्ततः?

ऐन्द्र०—ततः—

शक्तेः शरश्चापि विनिर्गतोऽभू—
त्तेनैव मार्गेण स लक्षितोऽपि।

हतो मया नैव मया हतोऽय—
मेवं विवादः स तयोस्तदाऽऽसीत् ॥२१॥

अक०—( पुनः सहर्षमिव ) साधु साधु ! ततस्ततः ?

ऐन्द्र०—ततः प्रतापेनोक्तम् ।

आवयोर्निर्णयं खङ्गः स्वयमेव विधास्यति ।
जयो यस्य भवेदत्र तेनैव निहतः किरिः ॥२२॥

अक०—शक्तिसिंहोऽपि शूरः, मन्ये प्रतापोक्तं वचो नैव मृष्येत ।

ऐन्द्र०—युक्तं भवद्भिः संभावितम्, शक्तिसिंहेन तद्वचो नैव मृष्टम् ।

अक०—ततस्ततः ?

ऐन्द्र०—ततः 'नैतद् युक्तम्, मैवं विदध्याः, भ्रात्रोः संग्रामो नैवोचितः' इति वदत्स्वपि पुरोहितादिषु द्वावपि प्रतापशक्ती स्वं स्वं कुन्तमुद्यम्य योद्धुं सन्नद्धौ ।

अक०—ततस्ततः ?

ऐन्द्र०—ततः क्रोधास्फुरिताधरोष्ठौ आरक्तविशालविस्फारितनयनौ क्षुभितप्रलयपाथोधिभैरवनिनादौ अन्योन्यमाक्रमितुं प्रवृत्तौ ।

अक०—( मनसि ) मद्भाग्येनैव विहितं तयोरायोधनं महत् ।
विनाशेऽन्यतरस्यापि सिद्धमस्मत्समीहितम् ।२३।

ततस्ततः ?

ऐन्द्र०—ततस्सकरुणं तत्रस्थैः सर्वैरप्युक्तम्, वसुंधरे! केयं ते दशा भाविनी ?

प्रतापः शक्तिरहितो न जेतुं प्रभविष्यति ।
वसुधे ! हा निगडिता नी ( इत्युक्ते मौनमास्थितः )

अक०—विस्रब्धं ब्रूहि, इदं परोक्तं वचनम् ।

ऐन्द्र०— नीचानां मा वशं गमः ॥ २४ ॥

अक०—ततस्ततः ?

ऐन्द्र०—ततः रामगुरुरुभौ संबोध्येदमुक्तवान् । विरमतामुभौ संरम्भात्,

अन्यथा युष्मदर्थे मया आत्मोत्सर्गः क्रियते ।

युवयोर्जीवतोर्देशो न दास्यमुपयास्यति ।
तस्मात्स्वातन्त्र्यरक्षार्थमात्मोत्सर्गो विधीयते ॥ २५ ॥

इत्युक्त्वा अकालजलद इव निर्घुष्य उभावन्तरा समुपस्थितः।

अक०—( मनसि ) अप्रियमनुष्ठितम् । ( प्रकाशम् ) ततस्ततः ?

ऐन्द्र०—ततो यदा एवमपि प्रतापशक्ती संरम्भान्न विरतौ, तदा पुरोहितो रामगुरुश्छुरिकया—

भित्त्वा स्वकीयं हृदयं वीरात्मा पश्यतोस्तयोः ।
प्रजासाहसविस्तारमकरोद्भूरिसाहसः ॥ २६ ॥

ततो रक्ताप्लुतदेहं भूमौ लुठन्तं मुमूर्षुं रामगुरुमवलोक्य तौ द्वावपि विरतौ ।

अक०—आः ! अप्रियं जातम् । ततस्ततः ?

ऐन्द्र०—ततः किमिदं जातमिति प्रतापे कथयत्येव रामगुरुः पञ्चत्वमापन्नः । हा गुरो ! क्व गतोऽसि ? इति रुदन्नेव प्रतापः शक्तिसिंहं संबोध्येदमवोचत्--रे शक्ते ! त्वत्कृते एव इयं ब्राह्मणहत्या जाता तस्मात्त्वं मेवाडभूमेरपसर ।

अक०—ततस्ततः ?

ऐन्द्र०—ततः शक्तिसिंहोऽपि निःश्वस्य साश्रुनयनः सर्वान्सालुम्ब्रकर्णादीन्विलोक्य भूमिं प्रणम्येदमुक्तवान् ।

क्षमे ! क्षमस्वैतदवेहि सूनुः कुक्षौ न जातस्तव दुर्जनोऽयम् ।
मेवाडदेशं यदयं श्मशानं विधाय कोपात्सुखमाप्तुकामः ।२७।

इत्युक्त्वा परावृत्त्य सवेगं तत्स्थानात्प्रचलितः । ततः सकरुणं विलपन्तं प्रतापमवलोक्य सर्वे तदुन्मुखा अभवन्, अहमपि तेषां चक्षूंषि प्रतार्य शक्तिसिंहमनुप्रचलितः ।

अक०—ततस्ततः ?

मुह०—ततोऽहं वर्त्मनि शक्तिसिंहं समुज्ज्वलयन् प्रोत्साहयंश्च इहानीत-

वान्। स्थापयित्वा च तं युष्मदीयायतनशालायामहमिहायातोऽस्मि। मन्ये, स स्वयमेवेदानीं समुपस्थास्यते, अतः परं भवन्तः प्रमाणम्।

अक०—मुहम्मद! तवैतत्कार्येण अहमतिप्रसन्नोऽस्मि, अतस्त्वां सर्वगुप्तचराणामाधिपत्ये स्थापयामि।

मुह०—अनुगृहीतोऽस्मि।

अक०—अन्यदपि। इमे स्वर्णपत्यादयः पञ्च ग्रामास्तुभ्यं दीयन्ते। (इति लिखित्वा स्वमुद्राङ्कितं विधाय तस्मै प्रमाणपत्रं ददाति।)

मुह०—बाढमनुगृहीतोऽस्मि।

अक०—गच्छ, विश्राम्य। अहमत्रैव स्थितः शक्तिसिंहं प्रतीक्षे।

(इति निष्क्रान्त ऐन्द्रजालिकवेषधारी मुहम्मदः।)

(अक्बर एकाकी स्थितश्चिन्तयति।)

अक०—नाद्यापि मेवाडपतिः प्रतापो
मन्निघ्नतां याति स दुर्विदग्धः।
यावत्स्वतन्त्रो विचरेत्स भूम्यां
स्वप्नेऽपि तावन्मम नैव सौख्यम् ॥२८॥

(किंचिद्विमृष्य) परं मानः क्षत्रियपक्षपाती विशेषतो मेवाडीयेषु बद्धादरः। तैः सह कथमसौ वैरायिष्यते। (पुनर्विमृष्य) संभावयामि दक्षिणदेशं विजित्य परावर्त्तमानो मानो मेवाडाधिपतेः प्रतापस्य सविधे तद्रहस्यं परिज्ञातुं मया सह तत्सम्बन्धं घटयितुं चोन्मार्गेणापि उदयपुरं गमिष्यति। तत्र त्यक्तार्यमर्यादं मत्पक्षपातिनं मानं प्रतापो न संमानयिष्यति। मन्ये तेन मानोन्मुखो महाभिमानी मानस्तत्रासंतुष्टः स्यात्।

(अत्रान्तरे प्रविशति दौवारिकः।)

दौवा०—जेदु जेदु महाराओ।
जयतु जयतु महाराजः।

मेवाडओ आयाओ सत्तिसीहणामा छत्तिओ दुवारि चिट्ठइ।
मेवाडत आयातः शक्तिसिंहनामा क्षत्रियो द्वारि तिष्ठति।

अक०—सेनापतिः संदिश्यताम्, मन्नियोगाद् बहुमानपुरस्सरमेनं प्रवेशयतु।

दौवा०—जं देवो आणवेदि।
यद् देव आज्ञापयति। ( इति गत्वा सेनापतिं संदिशति। )
( ततः प्रविशति सेनापतिसहितः शक्तिसिंहः। )

शक्ति०—

प्रोद्यद्दर्पान्धकाराधिकृतसदसदज्ञानमूढान्तरात्मा
मिथ्याहंकारफल्गूकृतनिखिलजगद्वीरशौर्यप्रपञ्चः।
नीचानामाश्रयाद् यो व्रजति गिरिमहीं भीतभीतः प्रताप-
स्तद्देशध्वंसमिच्छन् वदति भगवतो वन्दकीं शक्तिसिंहः ॥२६॥

अक०—कस्मादयं प्रकोपः।

शक्ति०—( सक्रोधमिव ) आः! मया निपातितो वराहस्तमात्महतं मन्यमानः प्रतापो बहुभिर्बहुशो बोधितोऽपि नामन्यत। प्रत्युत मयैव सह योद्धुमारभत। परं तु यदि रामगुरुरन्तरा स्वात्मत्यागेन नागमिष्यत्तदा स मृत एवाभविष्यत्, मन्ये तदैवमेव एनमरक्षत्।

अक०—एवमेवैतत्। अतः परं किमभीप्सितम्।

शक्ति०—समूलं मेवाडदेशमुन्मूलयितुमिच्छामि, अतः किञ्चित्सेनासाहाय्यं प्रार्थये।

अक०—( स्वगतम् )

आरक्तनेत्रयुगलः स्फुरिताधरोष्ठो
रोषप्रकम्पिततनुर्ज्वलदुक्तियुक्तिः।
जीर्णोऽपि तत्कथनतो नववत्प्रतीतो
द्वेषोऽस्य तत्र विषये परिशुद्ध एव ॥३०॥

(प्रकाशम्)

लङ्कामिवाहं मेवाडं जित्वा गर्वसमुद्धतम्।
अभिषेक्ष्यामि तत्र त्वां यथा रामो विभीषणम्॥३१॥

परं यावन्मानसिंहो दक्षिणदेशं विजित्यायाति तावत्प्रतीक्षस्व। तदागमनानन्तरमेव—

अस्मद्दन्तावलघनघटाऽऽच्छाद्यमानप्रतापः
स्फारस्फूर्जत्सघनविचरत्सैन्यगर्जन्निनादः।
विभ्राजिष्णुप्रचुरविलसद्बाणवृष्टिप्रसारो
मेवाडे मे भवतु जलदः संगरः सैनिकानाम्॥३२॥

(सेनापतेरभिमुखम्) सेनापते! त्वमेनमार्यक्षत्रियाणां सैन्याधिपत्ये स्थापय। तावदयं सर्वान् सज्जीकरोतु।

सेना०—यथाऽऽज्ञापयति भवान्। (इति गन्तुमिच्छति।)

अक०—तिष्ठ तावत्। शक्ते! तुभ्यं गान्धारप्रदेशः प्रदीयते। तस्मात्त्वयाऽस्मदीयसामन्तश्रेणिमधितिष्ठता यथारुचि मदीयगोष्ठयामागन्तव्यम्।

शक्ति०—अनुगृहीतोऽस्मि।

(इति निष्क्रान्ताः सर्वे।)

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके द्वितीयोऽङ्कः।



# तृतीयोऽङ्कः ।

( रामगुरुवियोगादत्यन्तदुःखोद्विग्नः पुष्पवाटिकायां मन्त्रिसहितः स्थितः प्रतापश्चिन्तयति ।)

प्रतापः—

विहाय हा पुत्रकलत्रबन्धु-मित्रादिवर्ग्यानखिलानकस्मात् ।
कथं प्रतापं कृतवान् प्रतापं गुरो! द्युलोकं समधिष्ठितस्त्वम् ।१।

नये कविर्वाग्विभवे बृहस्पति-
विपत्प्रतीकारविधौ सदा शिवः ।
तपस्युदग्रे भगवानधोक्षजः
क्व मे स रामः स्थितिपालनक्षमः ।।२।।

( ततस्तत्रैव प्रविशन्ति कर्णसालुम्बरावतकृष्णादयः । 'विजयतामे-कलिङ्गेश्वर' इत्युक्त्वा सर्वे यथास्थानमुपविशन्ति । )

प्र०—मन्त्रिन् ! चूडावत ! रामगुरोः शुभाध्यवसायकृते स्मारकमत्र चत्वरमारच्यताम् । किञ्च—

तत्पुत्रोऽपि न्यस्यतां तत्पदव्या-
मेकं ग्रामं श्रीसमृद्धं प्रदाय ।
आचार्यः स्यात्सर्वकार्येषु चायं
देशोन्नत्यै धर्मकर्माणि कुर्वन् ।। ३ ।।

चूडावत-मन्त्री—यथाऽऽज्ञापयति देवः । ( इति दौवारिकेण रामगुरुपुत्रमाह्वयति । )

( ततः प्रविशति दौवारिकेण सह रामगुरुपुत्रः सर्वे प्रणमन्ति । )

गुरुपुत्रः—विजयन्तां भवन्तः ।

( मन्त्री ग्रामदानपत्रं लिखित्वा प्रतापायार्पयति । प्रतापस्तत्पत्रं स्वकीयमुद्रया प्रमाणीकृत्य गुरुपुत्राय प्रयच्छति । )

प्रता०—भो गुरुपुत्र ! अद्य प्रभृति भवान् गुरोः स्थाने प्रतिष्ठाप्यते ।

गुरुपुत्रः—

दुर्जयारिधरणीधवौषधीनाथभानिकरहारिभास्करः ।
नीतिवल्लिपरिवर्धनाम्बुदो राजतामवनिपः प्रतापराट् ।। ४ ।।
ऐश्वर्यसंपत्तिविधौ सुसाधू राजत्कलानाथरुची रणेषु ।
मूर्तिर्हरेर्वाङ्घ्रिनिचयः पदौ च प्रताप! सौख्यं भवतो विधत्ताम् ।५।

( इत्याशिषं ददाति )

सालुम्बः—महाराज ! गुरुपुत्रः पण्डितप्रवरः कविवरश्च ।

प्रता०—अत एव गुरुपदे प्रतिष्ठाप्यते ।

( ततः प्रविशति मानवृत्तपरिज्ञानाय प्रेषितः प्रतापानुचरः ।)

अनुचरः—(प्रतापं विलोक्य)

सिन्दूरारुणनेत्रकान्तिरुचिरः प्राभातिकेन्दुद्युति-
र्देहे किंचिदसौ दधच्छिथिलतां भूमावुपेक्षास्थितः ।
मन्दं मन्दमिव ब्रवीति किमपि प्रम्लानचेतोऽन्तरः
खिन्नः किन्तु निशाप्रजागरवशात्किं वा शुचा सद्गुरोः ।।६।।

( उपसृत्य )

जयतु जयतु महाराजः ।

प्रता०—कथय क्वेदानीं मानः ?

अनु०—दक्षिणदेशं विजित्य अभिमानसमुत्पूरितान्तःकरणो भवन्तं स्वविभवं दर्शयितुमुन्मार्गेणैव उदयपुराभिमुखं प्रचलितः ।

प्रता०—सालुम्ब ! एतदागमने कोऽप्यत्र गूढाभिसन्धिः स्यात् ।

सालु०—( किंचिद्विमृष्य ) मन्ये, स्वविभवं भवन्तं दर्शयितुं समायाति ।

अथवा आत्मवद् भवतोऽपि यवनैः सार्द्धं संबन्धं घटयितुमभिकाङ्क्षति ।

प्रता०—( वीरासनस्थः सन् खड्गमाकर्षति । ) आः ! क एवं मयि स्थिते यवनैः सार्द्धं मे सम्बन्धं घटयितुं प्रभवति ।

सालु०—एवमेवैतत्, परमयं तस्य गूढाभिसन्धिरुच्यते ।

प्रता०—सर्वथा असंमान्योऽयम् ।

पितृष्वसुर्दानवशेन लब्धां मानप्रतिष्ठां शतशो धिगस्तु ।
को म्लेच्छपङ्क्तावितरोऽपि भुङ्क्तां त्रपामपास्यार्यकुलप्रसूतः ।७।

कर्णः—युक्तमेतत् ।

प्रता०—परं मन्ये, तेनापमानेन मानो वैरायिष्यते ।

कर्णः—वैरोत्पादने दोषः कस्येत्यपि विचारणीयम् ।

प्रता०—यद्यपि मानस्यैव दोष इति सर्वथा युक्तं तथापि नासौ विचारयति।

सालुम्बः—शौर्यमदोन्मत्तो नासाववगच्छति ।

प्रता०—युक्तं संभाव्यते, परम्—

संबन्धने निजसमुज्ज्वलधर्मदोष-
स्त्यागे च तेन समरः पतितो गले स्यात् ।
मनो विलोकयतु मे समरप्रयोगं
मानं विहाय यदि नैव पलायतेऽसौ ॥ ८ ॥

( इति खड्गं परामृशति )

सर्वे—वयं सर्वे संनद्धाः स्मः । यवनानां कृते आत्मजातिमास्कन्दत्यसौ, किमनेन शोभनं स्यात् । न खलु वयं समराद्बिभीमः ।

क्षत्रियाणां कृते धर्म्यं यदि युद्धमुपागतम् ।
अतः परमभीष्टं किं यत्स्यान्मोक्षपदात्परम् ॥ ९ ॥

मन्त्री—परमसौ अतिथिः, अतो लौकिकव्यवहारेण भोजनादिभिः सत्कार्यः। तदीयगूढाभिसन्धिज्ञानानन्तरं यद्भविष्यति तद् द्रक्ष्यामः, प्रतिकरिष्यामश्च ।

प्रता०—एवमस्तु।

(ततः प्रविशति दौवारिकः।)

दौवा०—जेदु जेदु महाराओ।
जयतु जयतु महाराजः।
माणागमणवुत्तंतणिवेअओ एक्को भोदीओ सेणाअरो दुआरि
मानागमनवृत्तान्तनिवेदकः एको भवदीयः सेनाचरः द्वारि
चिट्ठइ।
तिष्ठति।

प्रता०—प्रवेशय।

(ततो दौवारिकेण सह प्रविशति सेनाचरः।)

सेनाचरः—जेदु जेदु महाराओ।
जयतु जयतु महाराजः।

प्रता०—कथय क्वेदानीं मानः।

सेना०—इयाणिं माणसीहो सव्वं पि सेणासंरोहं उदेउरस्स दक्खिणभा-
इदानीं मानसिंहः सर्वमपि सेनासंरोहमुदयपुरस्य दक्षिणभागे
अम्मि सारिणवेसिय कइवएहिं सेणासंभाविअपुरिसेहिं
संनिवेश्य कतिपयैः सेनासम्भावितपुरुषैः
सईयपासअराणुअरेहिं चेव सह उदेउरं पविसमाणो भोदी-
स्वकीयपार्श्वचरानुचरैरेव सह उदयपुरं प्रविशन् भवदीय-
यणिवासगिहाहिमुहं आगच्छइ।
निवासगृहाभिमुखमागच्छति।

प्रता०—मन्त्रिन्! त्वं कुमारं पुरस्कृत्य बहुमानपुरस्सरं मानं प्रवेशय। स्नानभोजनादिप्रबन्धं च बहुमूल्यसुशोभनद्रव्यैर्मधुराम्ललवण-कट्वादिरसास्वादितैर्नानाविधोपस्करणसंपाद्यमानभक्ष्यभोज्यले-ह्यचोष्यचर्व्यादिविविधपदार्थजातैर्विधेहि। सह भोजनायोक्ते यथासंभावितं व्याजः प्रदर्शनीयः। कुमारोऽपि सहभोजने नैव नियोक्तव्यः। सालुम्ब! त्वमपि तदातिथ्यसत्कारेऽस्य साहाय्यं

कुरु । अहमपि कर्णेन सह सौधस्थितो भूत्वा वातायनेन सर्वं विलोकयिष्ये ।

मन्त्री—यथाऽऽज्ञापयति देवः । ( इति कुमारसालुम्वाभ्यां सह निष्क्रान्तः । )

( पटीक्षेपः । )

( ततः स्नानपूजनादिसकलकर्मनिवृत्तो वितानाधःस्थितो मानः प्रतापागमनं प्रतीक्षते । )

( ततः किञ्चिद् दूरतः समुपतिष्ठते वीणां वादयन्ती सतालं गायन्ती लोकान्प्रबोधयन्ती काचिद् योगिनी । तत्समनन्तरमेव प्रविशति नानाविधद्रव्योपेतं मधुरादिरसास्वादयुतं राजभोजनमादाय सूपकारः । सूपकारो मानस्य सम्मुखं भोजनपात्रं स्थापयति । )

( योगिनी गायति । )

त्यज रे मान कपटमदजालम् ।

( मानपदश्रवणान्मानोऽवहितः शृणोति । )

भज शिवकरणमीशपदपङ्कजममरसमर्पितमालम् ।
परमपदप्रदमशुभनिवारणमखिललोकपरिपालम् ।
प्रणतसुरासुरयक्षनागनरकिन्नररक्षोभालम् ।
भवभयहरणमरुणनखराञ्जितमघचयदलनकरालम् ।
परमसुकृतसमुपागतदर्शनममृतसरोवरनालम् ॥ १० ॥

मानः—( मनसि ) किमियं मामधिक्षिपन्ती कथयति, जीवं वा ? ( प्रकाशम् ) प्रतापमाह्वय । अपरं च भोजनपात्रं सज्जीकृत्यानय ।

मन्त्री—( बद्धाञ्जलिः ) महाराज ! प्रतापस्य शिरोवेदनाऽस्तीति अन्तःपुरे शेते ।

मानः—कुमार ! त्वं गत्वा तं निवेदय । मानो भोजनासनोपविष्टो भवन्तमाह्वयति । आगत्य च यथारुचि किञ्चिदपि भुङ्क्ताम् ।

कुमारः—महाराज ! भवान् भुङ्क्ताम्, पूज्यचरणा इदानीं शेरते ।

मानः—कुमार ! त्वं गत्वा तमुद्बोध्य समानय ।

कुमारः—नाहमुद्बोधयितुं शक्नोमि ।

मानः—कुमार ! त्वं ममानुरोधाद् गत्वा तमुद्बोध्य कथय । नायं मानस्त्वया विना भोक्ष्यत इति ।

कुमा०—यथाऽऽज्ञापयति भवान्, परं पूज्यचरणानां शिरोवेदनाऽस्तीति न ते आगमिष्यन्ति ।

मान०—त्वं गच्छ, कथय मत्संदेशम् । यथारुचि किञ्चिदपि भुञ्जाम्, नाहमन्यथा भोक्ष्य इति ।

कुमा०—यथाऽऽज्ञापयति भवान् । ( इति निष्क्रान्तः । )

मानः—( स्वगतम् ) प्रतापस्य भवेदपि शिरोवेदना, परं तु कर्णजगन्मल्लप्रभृतयो राजवंश्याः केचिदपि नैव विलोक्यन्ते । किञ्च सत्यामपि शिरोवेदनायामागत्य सहोपविश्य किञ्चिद्भोजने का क्षतिः, नूनमसौ मां तिरस्कुरुते । ( प्रकाशम् । )

मन्त्रिन् ! कर्णप्रभृतयो नैव विलोक्यन्ते ।

मन्त्री—महाराज ! ते सर्वेऽप्यद्य आखेटार्थं गताः ।

मानः—किं मदागमनकारणादेव सर्वेऽपि आखेटार्थं गताः, किं वा व्याजोऽयम् ।

( अत्रान्तरे मानसिंहपार्श्वचरः कश्चित्पिशुनः मानस्य कर्णे एवमेवेति कथयति । )

सालुम्ब्रः—( किञ्चित्क्रुद्धः ) किं नाम एवमेवेति । भवतां मदेन आगमनमितरथा वेति भवन्त एव जानताम् । वयं तु सौहार्देन भवतामागमनमित्येव जानीमहे ।

मन्त्री—( मानसिंहमुद्दिश्य ) महाराज ! भुङ्क्तां भवान्, शीतीभवत्येतत् ।

मा०-शीतं वा नीरसं वा विरसमपि भवेत्सैकतं वाऽप्यरुच्यं
रूक्षं वाऽप्यर्द्धपक्वं लवणविरहितं दुष्कषायत्वयुक्तम् ।
इष्टस्वज्ञातिमध्ये चणककृतमपि स्वाद्यते यत्सगोत्रैः
सार्धं तद् भोज्यसौख्यं भवति तदपरं नीचवृत्त्यात्मपूर्तिः ११

मन्त्रिन् ! कथं कुमारोऽपि नायातः ।

मन्त्री—महाराज ! भुङ्क्तां भवान् । सोऽप्यागमिष्यति । कदाचित्पितुः

परिचर्यावशाच्चिरयति ।

मानः—( स्वगतम् )

शाकं नैव बुभुक्षतेऽत्र कुलजस्त्वेकोऽपि साकं मया
धिङ् मे जीवनमेवमप्यभिमतं संबन्धसत्त्वं च धिक् ।
मानोऽहं बहुलापमानकुपितो हंमानजीवातुकः
स्वल्पैरेव दिनैः फलं फलयिता तापं प्रतापे स्वयम् ।१२।

( ततः प्रविशति कुमारः । )

कुमारः—महाराज ! तातस्तीव्रशिरोवेदनया नैवागन्तुं शुक्नोतीति भवान् भुङ्क्ताम् ।

मानः-(भोजनपात्रात्पञ्चषौदनतण्डुलानादाय उत्तरीये बद्ध्वा, प्रकाशम् । )

जानाम्यस्य शिरोऽगदं कपटिनो मद्दण्डसंघट्टना-
त्कुप्यद्वीरगणप्रभूतविशिखैश्चैष क्षणात्सेत्स्यति ।
तीक्ष्णोदग्रकृपाणकृत्तपृतनास्तीर्णक्षमादारुणं
दृष्ट्वा स्वं विषयं स्वयं प्रशमिता शीर्ष्णो गदो मूलतः।१३।

( पुना रुष्टः सन् )

सुप्तः केसरलुञ्चनेन सहसा पञ्चाननः क्रोधितः
स्पृष्ट्वा फुंकृतिघोरविस्तृतफणः कृष्णाहिरुद्बोधितः ।
प्रोद्यत्कीलकदम्बभीषणवपुर्वह्निः समालिङ्गितो
यन्मेऽकार्ष्ट तिरस्क्रियामसिपतेर्भूपालचूडामणेः ॥१४॥

( पुनः सरोषं सालुम्ब्रादिसमक्षं प्रतापादीन् लक्षीकृत्य प्रतिजानीते । )

आस्तां मिथ्याशिरोऽर्तिः परमहमखिलारातिविध्वंसदक्षो
मानो मानप्रदाता प्रधनरिपुगणस्तूयमानासिधारः ।
चञ्चद्दोर्दण्डवन्दीकृतनिखिलजगद्भूमिपालासिहारी
मेवाडं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये१५।

सालुम्ब्रः——सन्निपातरोगिणः किं किं न जल्पन्ति। याहि याहि, यत्ते शक्यं तदाचर। स्वसामर्थ्यं नावशेषयेः।

भर्तारमादाय पितृष्वसुस्त्वं संग्रामभूमिं समुपाश्रयेथाः।
तन्नाशतो वैरविधिः समाप्तो भवेत्सुखी स्यात्सकलोऽपि लोकः १६

( मानः अश्वरवान्निव स्वशिविरं गतः। )

सौधस्थितः प्रतापः——कर्ण ! ज्ञायते मानोऽपमानं मन्यमानोऽभुक्त्वैव गतः।

कर्णः——अहमप्येवं संभावयामि।

प्रता०——पश्य, कुमारसहितः सालुम्ब्र इत एवागच्छति। ततः सर्वं विज्ञास्यते।

( ततः प्रविशतः कुमारसालुम्ब्रौ। )

प्रता०——सालुम्ब्र ! किमसौ मानोऽभुक्त्वैव गतः ?

सालु०——अथ किम्।

प्रता०——किमसावब्रवीत् ?

सालु०——सन्निपातरोगिणः किं किं न जल्पन्ति।

प्रता०——तथापि किमसावब्रवीत् ?

सालु०——पञ्चषतण्डुलानुत्तरीये बद्ध्वा "मेवाड़ं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये" इत्युक्तवान्।

कर्णः——( सक्रोधम् ) मेवाड़ध्वंसकंमन्यः कथमसौ न गृहीतः।

सालु०——अतिथिरिति कृत्वा विमुक्तोऽसौ।

प्रता०——त्वया पुनः किमुक्तम् ?

सालु०——'भर्त्तारमादाये' त्यादि पठति।

कर्णः——साधूक्तम्, साधु सालुम्ब ! साधु ! वीरोचितमेवोक्तम्।

प्रता०——ततस्ततः ?

सालु०——ततोऽसौ त्वरितमेव स्वशिविरं गतः।

प्रता०——पश्य, पश्य, एतत्सैन्यं द्रुततरं प्रयाति। अस्त्वेतत्, इदं तु पूर्वमेव निश्चितमासीत्, मानोऽपमानं मन्यमानो रुष्टो भवि-

ष्यतीति। उदूखले शिरसि दत्ते मुसलात्का भीतिः। युद्धं तु निश्चितमेव।

ताडिताशीविषसमो मानो वैरं चरिष्यति।
प्राज्यं सैन्यं दृढीकृत्य क्षिप्रमेवाभियास्यति ॥१७॥

परमिदानीं तज्जये प्रकारो विचारणीयः।

कर्णः—इदानीमेव सैन्यं सज्जीकृत्य आक्रमितव्यम्।

प्रता०—स चेदानीमतिथिः, तावत्स्वसीम्नि च गमिष्यति। अथापि एतद्भियेव द्रुततरं तत्सैन्यं प्रयाति, कथमसौ आक्रम्य ग्रहीतुं शक्यते। अद्य सायं सर्वान्सामन्तानाहूय परिषदि परामर्शो विधेयः। सालुम्ब्र! त्वमपि गच्छ, मन्त्रिणमादिश। ममाज्ञया सायं परिषत्कर्तव्या, सर्वानपि सामन्तानाह्वयतु।

सालु०—यदाज्ञापयति भवान् (इति निष्क्राम्यति। पटीक्षेपः।)

(ततः प्रविशति सायं सर्वसामन्तादिसहितः परामृशन् प्रतापः।)

प्रता०—कथमसावकब्बरो विजेतव्यः।

कर्णः—वयं सहस्रयोधिनस्तान् आक्रम्य विजेष्यामहे।

चूडावतः—नहि सर्वे भवादृशाः, असंख्येयसैन्यः शत्रुः, तत्रापि बहवो युद्धविशारदाश्च।

रावतकृष्णः—तत्सैन्यागमने सति अस्माभिः पश्चादाक्रमो विधेयः।

सालुम्ब्रः—नैतत्संभाव्यते, अविच्छिन्नपङ्क्तयस्ते आक्रमिष्यन्ति।

भिल्लाधिपतिः—रत्तिम्मि सुअप्पेहिं सेणिएहिं सिविरम्मि आक्कमिय सव्वे
रात्रौ स्वल्पैः सैनिकैः शिविरे आक्रम्य सर्वे
णिहंतव्वा।
निहन्तव्याः।

ग्वालियरनरेशः—एवं सति नास्माकं शौर्यं देवा विलोकिष्यन्ते।

सेनापतिः—एकदा एवं जातेऽपि, पुनस्ते सावधाना भविष्यन्ति।

उपसेना०—एवं कृते शत्रोर्हानिरधिका भविष्यति, परमस्माकं जये तु संदेह एव।

प्रता०--मम त्वेवं प्रतिभाति । शत्रुसैनिकानद्रिमध्यगान्विधाय आक्र-
मितव्यमिति ।

सर्वे—युक्तम्, युक्तम् ! किं तु कथम् ?

प्रता०—सर्वाऽप्युपत्यका अन्नजलफलादिभिः शून्या विधातव्या ।

अन्नपानाद्यसंप्राप्तेर्न मां ज्ञास्यन्ति दुर्जनाः ।
आक्रम्य युगपत्सर्वान् हनिष्यामोऽद्रिमध्यगान् ॥१८॥
अस्यामुपत्यकायां च न कश्चिच्चारयेत्पशून् ।
न गच्छेच्चेति राजाज्ञा तद्विराद्धुर्वधो भवेत् ॥ १९ ॥

सर्वे—साधु साधु ! शोभनोऽयं प्रकारः ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके
तृतीयोऽङ्कः ।



# चतुर्थोऽङ्कः ।

( ततः प्रविशतो भिल्लदम्पती । )

भिल्ली—( अवलोक्य ) णाह ! कहं खु चित्तरहोज्जाणकप्पा इयं उवच्चआ
नाथ ! कथं खलु चैत्ररथोद्यानकल्पा इयमुपत्यका
मरुभूमिसरिसी विहिआ ?
मरुभूमिसदृशी विहिता ?

भिल्लः—माणसीहो राआ सव्वं मेवाडं धंसइउं पडिसुणिय अगबर-
मानसिंहो राजा सर्वं मेवाडं ध्वंसयितुं प्रतिज्ञाय अक्बर-
समीवम्मि सेणामाणेउं गओ ।
समीपे सेनामानेतुं गतः ।

भिल्ली—कम्हा सो रुट्ठो ।
कस्मात्स रुष्टः ।

भिल्लः—सो क्खु दक्खिणदेसं जइऊण मेवाडाहिवइं पदावं विहवं
स खलु दक्षिणदेशं जित्वा मेवाडाधिपतिं प्रतापं विभवं
दंसइउं आगओ । पदावेण तेण सह भोअणं ण कअं तओ
दर्शयितुमागतः । प्रतापेन तेन सह भोजनं न कृतं ततो
माणसीहो रुट्ठो ।
मानसिंहो रुष्टः ।

भिल्ली—तेण सह भोअणं कम्हा ण कअं ? दुए वि सुद्धछत्तिअकुलुप्प-
तेन सह भोजनं कस्मान्न कृतम् ? द्वावपि शुद्धक्षत्रियकुलोत्प-
ण्णे चेव ।
न्नावेव ।

भिल्लः—एव्वं चेव । परं तस्स पिउणा अप्पपिउदासीपुत्तिआ जउणस्स
एवमेव । परं तस्य पित्रा आत्मपितृदासीपुत्रिका यवनाय

अगबरस्स दिण्णा, तेण अगब्बरो माणसीहं सेणाहिवइं अकारिसी।
अक्वराय दत्ता, तेन अक्वरो मानसिंहं सेनाधिपतिमकार्षीत् ।
सो क्खु माणसीहो बहुओ देसाओ जइऊण अगब्बरस्स देइ ।
स खलु मानसिंहो वहून् देशान् जित्वा अक्वराय ददाति
बहूणं रायाणं कण्णगाओ अगबरस्स दावेइ । जो क्खु ण देइ,
वहूनां राज्ञां कन्यका अक्वराय दापयति। यः खलु न ददाति
तेण सह जुज्झइ । जुज्झिऊण य दावेइ ।
तेन सह युध्यते । युद्ध्वा दापयति ।

भिल्ली—माणसीहो अणुइयं करेइ, परं तेण सह भोअणं कम्हा ण
मानसिंहो ऽनुचितं करोति, परं तेन सह भोजनं कस्मान्न
कअं । तस्स पिउणा पिउदासीकण्णगा चेव दिण्णा ।
कृतम् । तस्य पित्रा पितृदासीकन्यका एव दत्ता ।

भिल्लः—दासीकण्णगा चेव दिण्णा । इअं तु सच्चं, परं सो दासी-
दासीकन्यका एव दत्ता । इदं तु सत्यं, परं स दासी-
कण्णअं दाऊण तत्थ अप्पणो कण्णगाओ वि अहिअं ववहरइ ।
कन्यकां दत्त्वा तत्र आत्मनः कन्यकाया अपि अधिकं व्यवहरति
तस्स जउणस्स अणुअरत्तं पिव करेइ । आरिएहिं जुज्झइ,
तस्य यवनस्य अनुचरत्वमिव करोति । आर्यैर्युध्यते,
अप्पाणं जउणस्स संबंधिणं कहेइ, अओ चेव माणसीहेण सह
आत्मानं यवनस्य संवन्धिनं कथयति, अत एव मानसिंहेन सह
पदावेण भोअणं ण कअं ।
प्रतापेन भोजनं न कृतम् ।

भिल्ली—एव्वं खु पदावेण जुत्तं चेव कअं । अम्हे एव्वं मुणे । तुम्हे
एवं खलु प्रतापेन युक्तमेव कृतम् । अहम् एवं जानामि । यूयं
सव्वे वि पदावस्स साहज्जं करिस्सह ।
सर्वेऽपि प्रतापस्य साहाय्यं करिष्यथ ।

भिल्लः—अवस्सं ।
अवश्यम् ।

( अत्रान्तरे राजपुरुषा बद्ध्वा द्वौ भिल्लौ नयन्ति । )

राजपु०—राअएणाओ पावइ अवहेलणफलं सुयं पुरिसो ।
राजाज्ञायाः प्राप्नोति अवहेलनफलं स्वयं पुरुषः ।
पाणदंडो इमाणं पसुचारणकए चेव ॥ १ ॥
प्राणदण्डः अनयोः पशुचारणकृते एव ॥ १ ॥

भिल्ली—एहि अम्हे अस्स सिलाअलस्स भाएण अंतरिए होऊण
एहि, आवामस्य शिलातलस्य भागेन अन्तरितौ भूत्वा
चिट्ठामो, जाव इमे गहिऊण एए गच्छंति ।
तिष्ठावः, यावदिमौ गृहीत्वा एते गच्छन्ति ।

( तथा कुरुतः, राजपुरुषास्तौ गृहीत्वा निर्गताः । )

भिल्लः—णिग्गया सव्वे ।
निर्गताः सर्वे ।

भिल्ली—दारुणा रण्णो आणा ।
दारुणा राज्ञ आज्ञा ।

भिल्लः—अम्हे इमाणं गिहं गंतूण वित्तं कहिस्सामो ।
आवामनयोर्गृहं गत्वा वृत्तं कथयिष्यावः ।

( निष्क्रान्तौ )

बद्धभिल्लपुत्रः—आ ! दारुणा से आणा, पिउणो सूलादंडो विहिओ ।
आः ! दारुणा तस्य आज्ञा । पितुः शूलादण्डो विहितः ।
कल्ले भइणीभत्तुणो वि सूलादंडो हविस्सइ ।
कल्ये भगिनीभर्तुरपि शूलादण्डो भविष्यति ।

( अन्तर्गृहाद्धनुः शरांश्चानीय सज्जीकृत्य च प्रतापं हन्तुं प्रतिजानीते । )

ब० भि० पुत्रः—भइणीए वेहव्वाओ पुव्वं चेव पदावं हणिस्से ।
भगिन्या वैधव्यात्पूर्वमेव प्रतापं हनिष्यामि ।

ब० भि० पुत्रभगिनी—भायर ! मा चेव । अम्हाणं सवहो, मा पदावं हण ।
भ्रातः ! मैव । अस्माकं शपथः, मा प्रतापं जहि ।

सो क्खु अम्हाणं अएणदाआ राआ। सो क्खु ईसरो।
स खलु अस्माकम् अन्नदाता राजा। स खलु ईश्वरः।
( इति भ्रवती गृह्णाति )

ब० भि० पुत्रः—मुंचउ अम्हे, पदावं हणिस्से।
मुञ्चतु अस्मान्, प्रतापं हनिष्यामि।

भि० भगिनी—कम्हा ?
कस्मात् ?

ब० भि० पुत्रः—कहं खु तुए ण सुग्रं ?, पिउणो सूलादंडो दिएणो
कथं खलु त्वया न श्रुतम् ?, पित्रे शूलादण्डो दत्तः,
तक्कलेअरं पि ण दावेइ। कल्ले तुह भत्तुणो वि सूला-
तत्कलेवरमपि न दापयति। कल्ये तव भर्तुरपि शूला-
दंडो हविस्सइ।
दण्डो भविष्यति'

भि० भगिनी—कम्हा सूलादंडो दिएणो ?
कस्मात् शूलादण्डो दत्तः ?

ब० भि० पुत्रः०—मह पिया णिज्जणं उवच्चयाभाग्रं दट्ठूण अयावीओ
मम पिता निर्जनमुपत्यकाभागं दृष्ट्वा अजावी-
चारेउं गओ। रणणा य आणाए अवहेलणकए पिउणो
श्चारयितुं गतः। राज्ञा च आज्ञाया अवहेलनकृते पितुः
सूलादंडो दिएणो, कल्ले तुह भत्तुणो सूलादंडो हविस्सइ।
शूलादण्डो दत्तः, कल्ये तव भर्तुः शूलादण्डो भविष्यति।

भि० भगिनी—एव्वं पि अपरिक्खओ पदावो चिट्ठउ।
एवमपि अपरिक्षतः प्रतापस्तिष्ठतु।
( इति पादयोः पतति, स तामवधूय निष्क्रान्तः। )

चारणः—न स्वर्णाभूषणै राजा राजा भवति शक्तिमान्।
अन्यैरपरिभूताज्ञो राजा लोकैर्निगद्यते ॥२॥
( इति गायन्निष्क्रान्तः। )

भि० भगिनी—( उत्थाय प्रार्थयते । )

पदावो अपरिक्खयंगो होउ । हे अग्गिदेव ! पाणणाहा-
प्रतापोऽपरिक्षताङ्गो भवतु । हे अग्निदेव ! प्राणनाथा-
हिणायग्रं सअललोअसंथूयमाणकित्तिमंडलं सुजसत्थो-
धिनायकं सकललोकसंस्तूयमानकीर्त्तिमण्डलं स्वयशःस्तो-
मधउलियदिग्विभाअं सव्वजणमणोरंजणकरणपच्चक्खाअ-
मधवलितदिग्विभागं सर्वजनमनोरञ्जनकरणप्रत्याख्यात-
विहवं सूरियपदावाओ वि अहियअरं सुसोहणं अम्हाणं
विभवं सूर्यप्रतापादपि अधिकतरं सुशोभनम् अस्माकं
पदावराअं अपरिक्खयंगं करेउ । हा ! भाया गओ
प्रतापराजम् अपरिक्षताङ्गं करोतु । हा ! भ्राता गतः,
पदावं परिक्खयंगं करिस्सइ ।
प्रतापं परिक्षताङ्गं करिष्यति ।

(इति रुदती मूर्च्छति । पुनः किञ्चिदुच्छ्वस्य सर्वतो विलोकयति । एकतः स्थितौ भिल्लं भिल्लीं चावलोक्य तयोः पादयोः पतति । )

भि० भगिनी—तुम्हे मह लहुभायरं कुदो वि मग्गिऊण आणेह । तुम्हे चेव
यूयं मम लघुभ्रातरं कुतोऽपि मार्गयित्वा आनयथ । यूयमेव
ईसराओ, तुम्हे अम्हाणं कुलस्स पाणरक्खगाओ ।
ईश्वराः, यूयमस्माकं कुलस्य प्राणरक्षकाः ।

( इति कथयन्ती रुदती च पुनरमूर्च्छत् । भिल्लस्तन्मूर्च्छानिवृत्तये स्वभार्यां नियोज्य तल्लघुभ्रातुरन्वेषणार्थं गच्छति । )

भिल्ली—भइणि ! कहं खु मिया, णहि णहि हियए किंचिसासो
भगिनि ! कथं खलु मृता, नहि नहि हृदये किञ्चिच्छ्वासः
पडिप्फुडइ । जीवइ ।
परिस्फुरति । जीवति ।

( किंचिज्जलम् अस्या मुखे क्षिपति, मृत्तिकापिण्डमभिषिच्य नासिकाग्रे स्थापयति च । )

कहं खु अज्ज वि मुच्छा ण गया, मिया सा, (तस्याः मुखं निर्वर्ण्य)
कथं खलु अद्यापि मूर्च्छा न गता, मृता सा,
णहि णहि जीवइ एसा, किंचि उ ऊसासइ।
नहि नहि जीवति एषा, किंचित्तु उच्छ्वसिति।
( भिल्लस्तस्या लघुभ्रातरमन्विष्यन् चिन्ताकुलमिव एकत्र वृक्षतले स्थितं विलोकयति। )

भिल्लः—तुम्ह भइणी तुमे आहूएइ।
तव भगिनी त्वामाह्वयति।

ल० भ्रा० भि०—गिहे अत्थि कुसलं ?
गृहे अस्ति कुशलम् ?

भिल्लः—कुसलं चेव। गिहे गंतूण सयं चेव पेक्खिस्ससि।
कुशलमेव। गृहं गत्वा स्वयमेव प्रेक्षिष्यसे।
( उभौ त्वरितमेव गृहमुपस्थितौ। लघुभ्राता मूर्च्छितां भगिनीं विलोकयति। )

ल० भ्राता—कम्हा इयं मुच्छिआ।
कस्मादियं मूर्च्छिता।

भिल्लः—उव्वुद्धा सयं चेव सव्वं कहिस्सइ।
उद्बुद्धा स्वयमेव सर्वं कथयिष्यति।

ल० भ्रा०—भइणि ! कहं मुच्छिया।
भगिनि ! कथं मूर्च्छिता।
( भ्रातुः स्वरसंयोगात्किञ्चिदुच्छ्वस्य )

भि० भगि०—हा कुलदेवआओ ! पदावं अपरिक्खयंगं रक्खय।
हा कुलदेवताः ! प्रतापमपरिक्षताङ्गं रक्षत।

ल० भ्रा०—भइणि ! पदावो अपरिक्खयंगो चेव चिट्ठइ।
भगिनि ! प्रतापः अपरिक्षताङ्ग एव तिष्ठति।
( भिल्लभागिनी उद्बुद्धा लघुभ्रातरं विलोकयति। )

भि० भगिनी—भाय ! अज्ज तुह भाया पदावं मारेउं पडिसुणिय
भ्रातः ! अद्य तव भ्राता प्रतापं मारयितुं प्रतिज्ञाय

रायट्ठाणं गओ। पदावं रक्ख, सो क्खु ईसरो।
राजस्थानं गतः। प्रतापं रक्ष, स खलु ईश्वरः।
वेइयमरिआदारक्खणपरो विविहवंजणच्चायगहिअमुणि-
वैदिकमर्यादारक्षणपरो विविधव्यञ्जनत्यागगृहीतमुनि-
व्वओ अप्पकुलपरंपरागयसउतसमारत्तकम्मकरणनिउणो
व्रतः आत्मकुलपरंपरागतश्रौतस्मार्तकर्मकरणनिपुणो
णिअपयापालणविमुत्तसव्वसुहो अम्हाणं राया पदावो
निजप्रजापालनविमुक्तसर्वसुखः अस्माकं राजा प्रतापः
अपरिक्खयंगो होउ।
अपरिक्षताङ्गो भवतु।

ल० आ० भिल्लः—कम्हा तेण पडिण्णायं ?
कस्मात् तेन प्रतिज्ञातम् ?

भि० भगिनी—तुह पिउणो रण्णा सूलादंडो विहिओ।
तव पितुः राज्ञा शूलादण्डो विहितः।

ल० आ० भिल्लः—सुयं चेव। मह पिआ तुह भत्ता अ रण्णो आणं
श्रुतमेव। मम पिता तव भर्ता च राज्ञ आज्ञा-
ओहेलिय अयावीओ चारेउं गयाओ। तेण तेसिं पाण-
मवहेल्य अजावीश्चारयितुं गतौ। तेन तयोः प्राण-
दंडो विहिओ। ण हि क्खु रण्णा अप्पणो कडे दारुणा
दण्डो विहितः। न हि खलु राज्ञा आत्मनः कृते दारुणा
आणा किआ। किं तु पयाअणरक्खणट्ठं चेव। जओ
आज्ञा कृता। किन्तु प्रजाजनरक्षणार्थमेव। यतः
सुण्णट्ठाणदंसणेण रिऊणं णाणं चेव ण हविस्सइ।
शून्यस्थानदर्शनेन रिपूणां ज्ञानमेव न भविष्यति।
कुत्थ पदावो कुत्थ वा तस्स पयाअणो, अओ अम्हे
कुत्र प्रतापः, कुत्र वा तस्य प्रजाजनः, अतोऽस्मान्
मुहम्मदधम्माओ रक्खिउं दारुणा आणा विहिआ।
मुहम्मदधर्माद् रक्षितुं दारुणा आज्ञा विहिता।

भि० भगिनी—पदावं रक्ख।
प्रतापं रक्ष।

ल० आ० भिल्लः—केणोवाएण।
केनोपायेन।

भि० भगिनी—अम्हे गंतूण पदावस्स सविहे अहवा पदावदेवीए सविहे
वयं गत्वा प्रतापस्य सविधे अथवा प्रतापदेव्याः सविधे
कहिस्सामो, पदावो अज्ज आहेडणत्थं ण गच्छउ त्ति
कथयिष्यामः, प्रतापः अद्य आखेटनार्थं न गच्छत्विति
अपरिक्खओ होहिस्सइ।
अपरिक्षतो भविष्यति।

ल० आ० भिल्लः—कहं अज्ज रत्तिम्मि चेव से सविहे गमिस्सामो पभाए
कथमद्य रात्रावेव तस्य सविधे गमिष्यामः। प्रभाते
तुह भत्तुणो पाणदंडो हविस्सइ।
तव भर्तुः प्राणदण्डो भविष्यति।

भि० भगिनी—भत्तुणो पाणदंडो होउ मा वा। पदावो अपरिक्खअंगो
भर्तुः प्राणदण्डो भवतु मा वा। प्रतापः अपरिक्षताङ्ग-
चिट्ठउ।
स्तिष्ठतु।

आगन्तुकभिल्लः—अम्हे दुवे अस्से चोरिस्सामो। तेण रत्तिम्मि चेव तुम्हे
आवां द्वौ अश्वौ चोरयिष्यावः। तेन रात्रावेव युवां
गमिस्सह।
गमिष्यथः।

ल० आ० भिल्लः—जुत्तं।
युक्तम्।

(इति द्वावपि भिल्लौ तथा कुरुतः। तौ द्वावश्वौ चोरयित्वाऽऽनयतः
ताभ्यां भ्राताभगिन्यौ गच्छतः।)

भि० भगिनी—अहो अम्हाणं तुरियगामिणो अस्सा, पभाए चेव
अहो आवयोः त्वरितगामिनावश्वौ, प्रभात एव

गमिस्सामो ।
गमिष्यावः ।

ल० भ्रा० भिल्लः—हन्त, सयलविद्दज्जणसंथूयमाणो सुकिरणसोहि-
हन्त, सकलविद्वज्जनसंस्तूयमानः स्वकिरणशोभि-
अमहेसमत्थओ पच्छिमदिग्विभायअत्थमियमऊह-
तमहेशमस्तकः पश्चिमदिग्विभागास्तमितमयूख-
मंडलो ओसहीणाहो अहोभाए पडइ । अहो
मण्डलः ओषधीनाथः अधोभागे पतति । अहो
दिट्ठिप्पसररोही अप्पकरविलिंपिअणिहिलजअम्मंडलो
दृष्टिप्रसररोधी आत्मकरविलिप्तनिखिलजगन्मण्डलो
मग्गपरिण्णाणविच्छेअओ अंधयारो सव्वओ पसरइ ।
मार्गपरिज्ञानविच्छेदकोऽन्धकारः सर्वतः प्रसरति ।
कहं गच्छम्ह ।
कथं गच्छेव ।

भि० भगिनी—अस्सा सयं चेव तत्थ चेव गमिस्संति अंधआरे वि ते
अश्वौ स्वयमेव तत्रैव गमिष्यतः । अन्धकारेऽपि ते
विलोएंति ।
विलोकयन्ति ।

( अथ प्रभाते तत्रैव राजद्वारे तावुपस्थितौ । ज्वराक्रान्ता मूर्छितेव भिल्ली प्रल-
पति 'पदावं रक्खेह ईसरो सो ।' प्रताप आगत्यावलोकयति । )

प्रतापः—केयम् ? किमियं कथयति ?

भिल्लः—इमाए भाउणा तुम्हं मारेउं पडिण्णाअं ति णिवेअइउं आगया।
अस्या भ्रात्रा त्वां मारयितुं प्रतिज्ञातमिति निवेदयितुम् आगता ।

प्रतापः—सौभाग्यवती भव । एवंविधा एव स्त्रियो मम राज्यश्रियः सन्ति ।

भिल्ली—मह भत्तुणो मारणं आणत्तं, कहं सोहग्गवई होस्सामि ।
मम भर्तुर्मारणमाज्ञप्तम्, कथं सौभाग्यवती भविष्यामि ।

प्रतापः—

तव कान्तमुपैति यो निहन्तुं प्रथमोऽसौ रिपुरस्तु मे जगत्याम् ।
मयि रक्षति ते प्रियं त्रिलोक्यां न विरोद्धुं प्रभुरस्ति कोऽपि लोकः॥३

भि० भगिनी—सो तुह चेव आणाभंगस्स अवराही ।
स तवैव आज्ञाभङ्गस्यापराधी ।

( ततः प्रविशति राजपुरुषैर्गृहीतो धनुर्बाणसहितो भिल्लः राजाज्ञावहेलकस्तस्याः पतिश्च । )

राजपुरुषः—महाराज ! एष भवन्तं मारयितुं लताविटपान्तरितो भूत्वा स्थित आसीत्, भवतश्चारैर्दृष्टः सूचनाऽनुसारिभिरस्माभिर्गृहीतश्च ।

भि० भगिनी—महाराअ ! एसो क्खु मह भाआ, अवरो मे सामी, रक्खेअ इमे ।
महाराज ! एष खलु मम भ्राता, अपरो मे स्वामी, रक्षयत इमौ ।

प्रतापः—इमौ मुच्येताम् । इयं राज्यलक्ष्मीर्मा वैधव्यं भ्रातृमरणदुःखं वा अनुभवतु ।

( राजपुरुषाः किञ्चिद् वक्तुमिच्छन्तः स्थिताः । )

प्रतापः—नास्मिन्विषये किमपि वक्तव्यम् । एवंविधाया एव राजभक्तप्रजायाः कृते देशरक्षा । अस्याः पितुः शवोऽपि दीयताम् ।

राजपु०—यथाऽऽज्ञापयति महाराजः ।

( इति तौ मुञ्चन्ति, शवं च ददति । पटीक्षेपः । )

( ततः प्रविशति सिंहासनस्थितस्य अकबरस्य सविधे मानसिंहः )

मानसिंहः—विजयतां विजयतां सार्वभौमो महाराजः ।

अकबरः—( निःश्वस्य ) सेनापते ! यावदयं प्रतापो न नम्रीक्रियते तावन्न मे विजयः, नापि सार्वभौमता ।

यावत्प्रतापस्तपति प्रचण्डः स्वप्नायते शान्तिकथाऽपि तावत् ।
त्वयैष शम्यः शरवर्षणेन सोष्मागमं पक्वफलं नयैनम् ॥४॥

मानः—आः ! महानयमभिमानी, न बहुकालं स्थास्यति ।

अकबरः—किमसौ ! 'मानस्याप्यपमानं कुरुते ।'

मानः—अथ किम् !

अकबरः—आगतं पर्यवसानमस्य ।

मानः—सत्यम्, मुमूर्षोः पिपीलिकायाः पक्षौ समुत्पद्येते ।

अक०—सेयं मे निकृतिर्यदेष हतकः सार्द्धं मया स्पर्धते
मानं त्वामपमानमानयदहो धिग् जीवनं मादृशाम् ।
किं काश्मीरकलिङ्गवङ्गविजयात्किं वाऽपि याम्या जयात्
यावन्नैव जितो भवेदयमरिर्मेवाडदेशाधिराट् ॥ ५ ॥

मानः—जित्वैनं तव पादयोः सहसुतं संपातयिष्ये द्रुतं
भ्राम्यन्तं विकलं वनाद्वनमहं दुःस्थं विधास्येऽथवा ।
क्षुत्क्षामं स्वजनं विलोक्य सततं यातं भृशं दीनतां
यद्वा संधिसमुत्सुकं हतमदं चानाययिष्येऽन्तिकम् ॥६॥

अक०—सर्वं त्वयि संभाव्यते । एवं सति त्वामेव तद्राज्यस्याधिपतिं करिष्यामि ।

मानः—यथा भवद्भ्यो रोचते । श्रुतमेतन्ममागमनसमनन्तरमेव समस्तामेव मेवाडवसुधां विध्वंस्य क्वापि प्रनष्टः ।

अक०—कातरोऽसौ, भवताऽवश्यमेव विजेतव्यः ।

भवद्भयाद् या विपिने पलायते
शिलोच्चये वाऽथ निलीयते क्वचित् ।
रणाङ्गणे चापधरस्य कुप्यतः
कथं समक्षं स तवागमिष्यति ॥ ७ ॥

मानः—एवमेतत् । भवत्प्रतापस्यैवायं प्रभावः । अहमेनं क्षणादेव ग्रहीष्यामि ।

(स्वगतम्)—कृपाणपाणिं समराङ्गणागतं
विपक्षपक्षक्षयकारिणं क्रुधा ।
नृसिंहदुर्धर्षपराक्रमक्रमं
क एव तं धर्तुमलं धरातले ॥ ८ ॥

(प्रकाशम्) यद्यपि क्षुद्रोऽयं सुखेन जय्यश्च तथापि वनेचरसहायस्य न जाने कियदस्य बलम्, अतो महता बलेनाभियातव्यम् ।

अक०—अस्य भ्राता शक्तिसिंह एतेन विरुध्य संप्रति मामेव शरण-मायातः ।

मानः—यद्यपि शक्तिरहितोऽयं तथाऽप्यस्य जये महान् यत्नः कर्त्तव्यः ।

अक०—सत्यम्, (चिन्तां नाटयन्) परं कैः साधनैरसौ कथमभिया-तव्य इत्यादि विचारणीयम्, अतः सलीमसगरशक्तिसिंहप्रभृतीन् आह्वयामि । कः कोऽत्र भोः !

दौवा०—(प्रविश्य) जेदु जेदु देश्रो ।
जयतु जयतु देवः ।

अक०—सलीमसगरसिंहशक्तिसिंहपृथ्वीसिंहान् द्रष्टुमिच्छामि ।

दौवा०—यं आणवेदि देश्रो । (निष्क्रान्तः ।)
यदाज्ञापयति देवः ।

अक०—मन्ये शक्तिसिंहाद् बहुतरभेदस्फोटनं भविष्यति ।

मानः—युक्तमिदम्, परं संभावयामि शक्तिसिंहः प्रतापमवलोक्य भ्रातृ-स्नेहानुविद्धः स्यात् ।

अक०—अधुना भेदस्फोटनं तु करिष्यति, तस्य च्छिद्राणि कथयिष्यति, प्रतिबन्धं च बोधयिष्यति, तेन स सुजयो भवेत् ।

मानः—उपपद्यते ।

(ततः प्रविशति सलीमादिभिः सह दौवारिकः ।)

दौवा०—एस देओ, उपसप्पन्तु भवन्तो ।
एष देवः, उपसर्पन्तु भवन्तः ।

सलीमप्रभृतयः—( उपसृत्य )

विजयतां देवः। ( यथास्थानमुपविशन्ति । )

अक०—दौवारिक ! स्वनियोगमशून्यं कुरु ।

( इति निष्क्रान्तो दौवारिकः । )

अक०—शक्तिसिंह ! प्रतापो विजेतव्यः, एष हि मानमप्यपमानयति ।

शक्ति०—मदान्धोऽयम् । स्वकीयानपि नावलोकयति ।

अक०—ततोऽभियातव्यः ।

सगरः—कथं कियता बलेन चेत्यत्र भवद्भिः किं निर्धारितम् ?

अक०—किमन्यत्—

वीराः क्षत्रियवंशजा रणकलापारंगताः पत्तयो
गच्छेयुर्विततायुधाः क्वचिनस्त्रिंशत्सहस्रोन्मिताः
तेषां चापि पुरःसरी दशशती दन्तावलानां भवे-
दुद्यत्कुन्तकरा व्रजेयुरयुतं मध्ये तयोः सादिनः ।६।

किं च—

पार्श्वे षष्टिः सहस्राण्यथ यवनभुवां सैनिकानामयन्ता-
मर्वन्तोऽखर्वगर्वा अरबभुवि भवाः संचरेयुः सहस्रम् ।
मानः शाहः सलीमः सगरमहवतौ शक्तिसिंहश्च सर्वे
सेनाया आधिपत्यं समरविजयिनो कार्यतः संविदध्युः ॥१०॥

रणागतं प्रतापं यो जीवग्राहं ग्रहीष्यति ।
तोषयिष्यामि तं भूयो दानमानविभूषणैः ॥११॥

सलीम ! त्वां सैन्याधिपत्ये नियोजयामि । यदि जीवन्नसौ न गृह्येत, तदैनं हत्वा अस्य सुतं गृह्णीयाः ।

सलीमः—आः ! कोऽयं वराकः—

लीनः पर्वतकन्दरासु विपिने मत्त्रासतः क्वाप्यसौ
दैवान्मे समरागतो यदि भवेन्नेत्रातिथिः कुत्रचित् ।

क्षिप्रं तर्हिं निपात्य तं भुजबलाद्बद्ध्वा भवत्पादयो-
रानेष्यामि मयेदमत्र भवतामग्रे प्रतिज्ञायते ॥ १२ ॥

पृथ्वी०—रणविद्याविशारदो महाबलिष्ठश्चासौ न सुजयः।

दंष्ट्रां मत्तमतङ्गजेन्द्ररुधिरापानारुणामुद्धतां
जृम्भास्फारितवक्त्रकोणविलसद्विद्युत्प्रभाभासुराम्।
संध्याकालसमुल्लसच्छशिकलाकोट्युत्कटां यो हरे-
रुद्धर्तुं प्रभवेत्प्रतापमवनौ जेतुं स वीरः क्षमः ॥ १३ ॥

कः कोपोत्कटशक्रचापविकटभ्रूभङ्गभीमाननं
चञ्चच्चारुकृपाणकृत्तपृतनासृग्बिन्दुकिर्मीरितम्।
विद्युत्कान्तिसदृक्समस्तसमरे चंचूर्यमाणं भृशं
भीष्मं भीमसमं प्रतापनृपतिं धर्तुं समर्थो भवेत् ॥१४॥

मानः—अस्तु प्रतापो वीरः। परमिह तु महावीरा एव सन्ति।

पृथ्वी०—अलमुक्तिप्रत्युक्तिभिः। समरभूमिरेवात्र निर्णायिका भविष्यति।

शक्ति०—युक्तम्। सैव निर्णयस्थानम्।

अक०—शक्तिसिंह! कथय प्रतापसविधे कीदृशी कियती च सेना।

शक्ति०—अयुतं क्षत्रियास्तत्र खड्गयुद्धविशारदाः।
बाणविद्यासु निपुणा भिल्लमीणादयः परे ॥१५॥

स्वल्पा एव पर्वतारोहिणो धानुष्काः असंख्यमपि ते सैन्यं समूलघातं हनिष्यन्ति। अतः—

शतघ्न्यो दशसंख्याः स्युर्भुशुण्ड्यो द्वे सहस्रके।
एवं सैन्यसमारोहे जयोऽस्माकं भविष्यति ॥१६॥

पृथ्वीसिंहः—(स्वगतम्) आः! धिगिदं भेदस्फोटनम्।

अकबरः—साधु शक्तिसिंह! साधु! प्रतापं विजित्य त्वामेव मेवाडदे-

शाधिपतिं करिष्यामि । त्वया सम्यग्मार्गं आदिष्टः । मानसिंह ! त्वयाऽपि सर्वसैन्यसामारोहेण सहाभिगन्तव्यम् । अहमपि अजमेरस्थितो भूत्वा सर्वं यथावसरं संपादयिष्यामि ।

( इति सर्वे युद्धोद्युक्ता निर्गच्छन्ति । ) पटीक्षेपः ।

( इतोऽधित्यकायां स्थितः प्रतापः स्वसामन्तादिभिः परामृशति । ततः प्रविशति आगरातः समायातश्चारः । )

चारः—जयतु जयतु महाराजः ।

प्रतापः—भद्र य यवनाधिराजवृत्तान्तम् ।

चारः—स खलूद्विग्नोऽपि स्वनीतिनैपुण्येनात्मानमनुद्विग्नमिव प्रकाशयति । स चेदानीम्—

स्नानं भोजनमासनं विलसनं संवाहनं क्रीडनं
पानं यानमभिष्टुतिं जयरवं द्यूतं च तौर्यत्रिकम् ।
नासाद्याद्रियते मनागपि भवद्भीतान्तरङ्गोऽनिशं
त्वत्तो मानपराभवं परमहो म्लेच्छाधिपो ध्यायति ॥१७॥

प्रतापः—कपटकलाकुशलोऽसौ ।

चारः—अथैकदा तेन सलीममानसिंहसगरादिप्रधानभटानाहूय भवन्तं जीवग्राहं ग्रहीतुं तेभ्यो बहुतरं प्रलोभनमदायि । किन्तु सर्वे तच्छ्रुत्वा मौनमेवावस्थिताः । केवलं सलीममानसिंहौ स्वौद्धत्यं प्रकटयन्तौ भवद्भूमिलिप्सया भवन्तं ग्रहीतुं प्रतिजानाते स्म ।

प्रता०—आः ! कोऽयं स्वाभिमानशून्यो मानः ।

विक्रीय गौरवमणिं मरणाद् विभीतो
यो म्लेच्छराजमनुगच्छति नीचवृत्तिः ।
सोऽयं क्षितिं समभिकाङ्क्षति चेत्तदेनं
युद्धे क्षितिं स्वभुजदण्डबलेन नेष्ये ॥१८॥

ततस्ततः ?

चारः—ततो भवतो यथावस्थितं शौर्यं निरूप्य पृथ्वीसिंहेनोक्तम् । नायं

ग्रहीतुं शक्यः। युवयोः शौर्यं संग्रामभूमिरेव निर्णेष्यति।

प्रता०—साधु साधु! पृथ्वीसिंहेन युक्तमेवोक्तम्। ततस्ततः?

चारः—ततो लक्षाधिकसुभटसंयुतं हस्त्यश्वशतघ्न्यादिसहितं तत्सैन्यं प्रयातम्।

प्रता०—कस्तत्र सेनापतिः?

चारः—सलीमः।

प्रता०—बालोऽसौ कथं सेनापतिः कृतः?

चार०—नाममात्रतोऽसौ सेनापतिः।

प्रता०—तर्हि मानसिंहः कः?

चारः—मानसिंहः सर्वस्वमेव। स हि सेनायाः सेनापतेश्च संरक्षकः। अस्याभियानस्य स एव कारणम्।

प्रता०—इदं तु विदितमेव, परं कथमसौ बालस्याधिपत्यं स्वीकरोति? सर्वमपि क्षत्रियवंशगौरवमनेन परित्यक्तम्। अस्तु, अथ यवनाधिपतिः कुत्रास्ते?

चारः—सोऽपि द्वितीयामभिनवसेनामादाय इतः कियति दूरे अजमेरपत्तने स्थितः। तदागमनानन्तरमेवाहमिहायातः। मन्ये पञ्चषैरेव दिनैः प्रथमं तत्सैन्यमिहागमिष्यति। अतः परं भवन्तः प्रमाणम्।

(अथ प्रतापसहायका रणोद्धटा भटा अहंपूर्विकया स्वस्वकरवालमादाय क्ष्वेडयान्ति।)

(अहंपूर्विकया सर्वे सोत्साहा विक्रमोद्भटाः।
शैलस्थिताः प्रतीक्षन्ते शत्रोरागमनं मुहुः॥ १६॥)

प्रता०—सेनापते! अत्रेदं युज्यते, वयं सर्वे सैनिकाः कोमलमीरपर्वतस्याधित्यकायां स्थिताः शत्रोरागमनं प्रतीक्षेमहि। इह हि शत्रोराक्रमणं सहसा नैव संभाव्यते।

यतः—अन्तः प्रवेष्टुं सरणिर्लघिष्ठा
यया चरन्तोऽरिभटाः क्रमेण।

महोपलानां च शरव्रजानां
वृष्ट्याऽतिवेगाद्विनिपातनीयाः ॥२०॥

सर्वे—सुयोग्यमिदं स्थानमस्मद्रणभूमेः ।

( इति हल्दीघाटीतटे गन्तुं सर्वे परिक्रामन्ति । पटीक्षेपः । ततः प्रविशत्यजमेरपत्तने स्थितः समरवृत्तान्तपरिज्ञानाय समुद्विग्नमना अकबरः)

अक०—कथमद्यापि समरभूमेर्न कोऽपि समायातः ।

मानोऽनेन निपातितः किमभवत्किं वा सलीमो हतो
दुर्धीरस्य जये कथं सुतमहं सेनाधिपत्ये व्यधाम् ।
दिष्ट्या चेद्विनिवर्तते रणभुवो जीवन्नसाववक्षतः
सत्यं तर्हि शपामि नैव समरे तं प्रेषयिष्ये पुनः ॥ २१ ॥

हन्त विभ्रान्तमनसा नियुक्तः स्वसुतो मया ।
ग्रहणे हनने तस्य बिडालस्य यथोन्दुरुः ॥ २२ ॥

( ततः प्रविशति दौवारिकः । )

दौवा०—जेदु जेदु महाराश्रो ।
जयतु जयतु महाराजः ।
महाराअ ! समरभूमिओ जुज्झवुत्तंतवाहओ दुआरि चिट्ठइ ।
महाराज ! समरभूम्या युद्धवृत्तान्तवाहको द्वारि तिष्ठति ।

अक०—प्रवेशय ।

( ततः प्रविशति दौवारिकेण सह चारः । )

चारः—( सहसोपसृत्य ) जयतु जयतु महाराजः ।

अक०—कथय, सलीमोऽपरिक्षतस्तिष्ठति ?

चारः—भवतां पुण्यकर्मप्रभावादपरिक्षत एव ।

अक०—सैन्याभियानमारभ्य निःशेषं वृत्तान्तं कथय ।

चारः—सलीमाधिपत्ये प्रचलितं त्वदीयं सैन्यं कोमलमीरपर्वतोपत्यकामध्यगमत् । तत्र च स्थित्वा शत्रोरासारप्रसारावरौत्सीत् ।

अक०—ततस्ततः ?

चारः—ततः शत्रवो रात्रावाक्रम्य बहून्सैनिकान् हत्वा खाद्यसामग्रीं विलुण्ठ्य अज्ञातमार्गेण पलायन्त । अथोदयपुरं गन्तुं संकीर्णेन पर्वतमार्गेण प्रथमं कतिचित्सैनिका अन्तः प्रविष्टाः । परं ते तत्रैवावरुध्य शत्रुणा व्यापादिताः ।

अक०—ततस्ततः ?

चारः—ततोऽन्ये प्रेषिताः, तेऽपि च तथैवावरुध्य विनाशिताः । यदा नैकोऽपि तेषां परावृत्तस्तदा मानप्रभृतयः ससैनिका अन्तः प्रविष्टाः । कृच्छ्रेण च संकीर्णमार्गान्निःसृत्य हल्दीघाटीमुपागताः ।

अक०—ततस्ततः ?

चारः—ततः प्रतापाज्ञासमनन्तरमेव—

मन्नासालुम्ब्रकाद्याः समरसुचतुरा लब्धभूरिप्रतिष्ठा
युद्धोद्युक्ताः ससैन्या अहमहमिकया क्ष्वेडयन्तः समन्तात् ।
युष्मत्सैन्यं निहन्तुं क्षणमपि विपुलं मन्यमानाः समस्ताः
शस्त्राणि भ्रामयन्तो विपुलतरभटां वाहिनीं तेऽभ्यगच्छन् २३।

पर्वतप्रान्ताच्च—

कालकूटमुखा बाणाः पन्नगा इव सत्वरम् ।
निपत्य वीरान् भवतोऽशाययन्समराङ्गणे ॥ २४ ॥

अक०—ततस्ततः ?

चारः—ततो बाणनिपतनसमनन्तरमेव सेनापतेराज्ञया त्वदीयसेनातः ।

आसन्कल्पमहामहाघनघटाघोरस्वना दुर्दमा
निर्मर्यादसमुद्रभीमनिनदप्रोच्चण्डधांकारिकाः ।
द्यावाभूमितमिस्रनीलवसनप्रस्तारिका विश्वतः
प्रावर्षन् गुलिका भटैरधिकृताः सर्वाः शतघ्न्यो भृशम् २५।

अक०—ततस्ततः ?

चारः—ततः क्षणमात्रेण उभयतः सेनायां बहवो भटा निपातिताः । एतद-

वलोक्य प्रतापः क्रोधारक्तनयनस्त्वत्सैन्ये प्राविशत् ।

खड्गाखड्गि ततश्चासीदुभयोः सैन्ययोर्महत् ।
कुन्ताकुन्त्यश्ववारेषु दारुणं सांपरायिकम् ॥ २६ ॥

अक०—ततस्ततः ?

चारः—ततः कस्यचित्प्रतापभटस्य ।

धृत्वा खड्गं कबन्धः क्षतजशबलितो व्यूहमुद्भिद्य वेगा-
च्चित्रं नृत्यन् प्रधावंश्चपलतरमसिं चालयन्नुग्रवीर्यैः ।
शीर्षं बाहूदरं वाऽच्छिनदखिलमरेः, सैन्यचक्रं समन्ताद्
विद्राव्यैवं स वीरस्तव विपुलबलस्यैकसंहारकोऽभूत् ॥ २७ ॥

न यावन्निपतत्येकः कबन्धस्तावदन्यतः ।
उत्थायान्यस्तवानीकं प्रविश्याहन्सहस्रशः ॥ २८ ॥

अक०—अहो तत्सैनिकानां शौर्यं यत्कबन्धा अपि शत्रुसैन्यं संहरन्ति । सत्यमियं मेवाडभूमिर्वीरप्रसविनी । ततस्ततः ?

चारः—ततः प्रतापः स्वकीयं चेतकनामानमश्वमितस्ततो धावयन् कमपि मृगयमाण इवासीत् । स च यत्रैवायाति, तत्रैव त्रस्ता इव भवदीया भटाः पलायमाना आसन् । तानवलोक्य प्रताप एवमवादीत्—

दन्तिभेदी कृपाणोऽयं पतन् युष्मासु लज्जते ।
मा भैष्ट रणशौण्डीरं मानमन्वेषयाम्यहम् ॥ २९ ॥

अक०—तदानीमसौ मानः कुत्रासीत् ?

चारः—न जाने, किन्तु सेनायाः पश्चाद्भागे एव स्थितः स्यादिति संभावयामि ।

अक०—किमसौ प्रतापाद्बिभेति ?

चारः—सम्भाव्यते ।

अक०—ततस्ततः ?

चारः—ततो रणोद्भटाः प्रतापभटास्त्वदीयसेनामाक्रान्तवन्तः ।

एकस्मात्करवालचालनगुरुः शोणिर्गुरुः स्थानत-
स्त्वत्सेनामसिनाऽच्छिनत्सरभसं चन्दावतश्चान्यतः ।
सालुम्ब्रोऽपि विलोपयन् रणकथां वीरान् विनिघ्नन्बला-
न्मन्नाख्यश्च तरक्षुवेगमभिनद् व्यूहं प्रविश्यान्तरा ।३०।

अक०—ततस्ततः ?

चारः—ततः—

यातः कोऽपि घटोत्कचोत्कटतनुर्दन्तावलानां बले
तेषां मूलकवत्पलाशविटपापीनान् करान्सोऽच्छिनत् ।
त्रस्तस्तेन भवन्मतङ्गजगणः स्वां वाहिनीं द्रावयन्
मृद्नंश्चापि निषादिनोऽवगणयन् द्रागद्रवद् दुर्दमः ॥ ३१ ॥

अक०—ततस्ततः ?

चारः—ततः कबन्धशौर्याद् वित्रस्यत् सहसा सालुम्ब्रादीनामाक्रमणात् क्षुभ्यद् गजादीनां मर्दनादुद्विजमानञ्च भवत्सैन्यं गजैः सहैव प्राद्रवत् ।

अक०—आः व्यर्थमेव मदोन्मादिना मया सर्पैः क्रीडितुमभिलषितम् । न चैतदवगतं प्रतापान्मानो बिभेतीति । ततस्ततः ?

चारः—ततः पलायमानं स्वसैन्यमवलोक्य सलीमप्रभृतयो विमनस्का इवासन् । किन्तु शाहबाजनामकस्त्वदीय उपसेनापतिः सेनामध्यं प्रविश्य सपटहनादमघोषयत् 'भो भोः सैनिकाः! मा पलायिध्वम्, श्रीमानकबरः स्वयमेवासंख्यातां सेनामादाय समराङ्गने समुपतिष्ठत' इति ।

अक०—साधु साधु ! युक्त एव तेन सेनाच्छलनप्रयोग आरब्धः ।

चारः—अथ किम् । ततस्तड्ढक्कानिनादश्रवणानन्तरमेव सर्वमपि ते सैन्यं परावर्तत । फलितश्च तस्यायं तन्त्रप्रयोगः । ततः पुनरप्यधिकतरं सोत्साहं भवद्बलमयुध्यत ।

अक०—ततस्ततः ?

चारः—ततो व्यूहे भग्ने विनाशिते च बहुतरे त्वदीये सैन्ये सलीमाधिष्ठितो गजः प्रतापस्य दृक्पथमगच्छत्। अथात्रैव मान इति मन्यमानः प्रतापः सोत्साहं चेतकाभिधं स्ववाजिनं तमभ्यनुदत्।

अक०—आः सलीम ! ममैवायं दोषः, यस्त्वां कातरहस्ते समर्पितवान्। ततस्ततः ?

चारः—ततः पञ्चशती भटानां सेनापतिं रक्षितुं प्रतापं रोद्धुं ग्रहीतुं हन्तुञ्च वेगात्पर्यापतत्। परं न जाने स कथं केन कदा च तां सकलामेवाच्छिनत्, अहो साहसं प्रतापस्य ! अहो लाघवं चेतकस्य !

अक०—ततस्ततः ?

चारः—ततो गजोन्मुखं क्षिप्तश्चेतक उत्प्लुत्य सलीमगजकुम्भान्तरे पदद्वयं निधायातिष्ठत्। प्रतापोऽपि तत्र गच्छन्नेव हस्तिपकशिरोऽच्छिनत्, कोऽयं ममोपरि समापतित इति मन्यमानो गजोऽप्यत्रस्यत्।

अक०—आः ! सलीमोऽपि किं हतः ? हा जीवनसर्वस्व ! हा ममाज्ञापरिपालनपरित्यक्तप्राण ! हा प्रजावत्सल !

( इति ब्रुवन् क्षणं मूर्च्छति। )

( चारः सोद्वेगं तालवृन्तमादाय उद्बोधयति। अकबर उद्बुध्य )

अक—सलीमस्य किमभूत् ! कथय कथय, त्वरितं किमिति नोच्यते।

चारः—महाराज ! कुमारस्तु अपरिक्षत एव। भवान् किमित्युद्विजते।

अक०—( समुच्छ्वस्य ) कथय, स केन कथं रक्षितः ?

चारः—गजत्राससमनन्तरमेव चेतको भूमाववातरत्। परं प्रतापश्चेतकं परावर्त्य तथैव गजकुम्भान्तरमारोहयत्। ततः प्रतापेन चालितः करवालः सलीमस्य मञ्चमच्छिनत्। सलीमश्च तदन्तरे न्यलीयत। परं सेनायां हतः सलीम इत्युद्घोषः प्रासरत्। ततो हा सेनापते ! हा महाराजाधिराजप्राणप्रिय ! हा युवराज ! इति भवत्सैनिका व्याकुला व्यलपन्। हस्तिपकशून्यस्त्रस्तश्च स गजः सलीममादाय दूरतरं पलायिष्ट।

अक०—( स्वगतम् ) अलमुद्धतशौर्येण, कातरोऽपि सन् जीवतु। नाह-मतः परं प्रतापसंमुखे तं प्रेषयिष्यामि। ततस्ततः ?

चारः—ततस्त्वदीयभटाः प्रतापं परिवार्य गृह्यतां हन्यतां मा पला-यतामेष इति वदन्तः ग्रहीतुं हन्तुं चाध्यवास्यन्। उद्घुष्टं च सेनायां सलीमो जीवतीति।

अक०—ततस्ततः ?

चारः—ततो भवत्सैनिकैः सर्वतश्छन्नं प्रतापमवलोक्य सालुम्ब्रकृष्णराव-महेश्वरसिंहप्रभृतयस्तदीयभटाः प्राणपणेन तमुद्धर्तुमयतन्त। सहस्रशस्त्वदीयभटांश्छिन्दन्तः प्रतापसन्निधे ते सर्वेऽपि समा-गच्छन्। तदानीं पलायमानं स्वदीयसैन्यमकबरः समायात इत्यु-क्त्वा मानसिंहोऽवारुणत्।

अक०—ततस्ततः ?

चारः—ततश्चतुर्षु स्थानेषु कुन्तैर्विद्धो गुलिकया प्रहृतोऽपि तैः सार्धं तव सैन्याज्जीवन्नेव निरगच्छत् प्रतापः। परं छत्रचामरलाञ्छनेन परिज्ञातं सर्वेऽपि त्वदीयभटाः पुनः पुनस्तमेवाक्रामन्।

अक०—साधु सैनिकाः साधु ! तस्मिन् हते सर्वे हता एव। ततस्ततः ?

चारः—ततो 'निपात्यतां हैममातपत्रमिदम्, अनेन चिह्नेन मेवाडाधिपति-मेव सर्वे समाक्रामन्ति' इति प्रतापसैनिकानां सर्वत एवोद्घोषः प्राव-र्तत। परं प्रतापः साग्रहं राजचिह्नभूतं हैमं छत्रं नैव न्यपातयत्।

अक०—ततस्ततः ?

चारः—ततः प्रतापस्योपरि निपततस्त्वदीयभटानालोक्य विजयतां विज-यतां प्रताप इत्युद्घोषयंस्त्वदीयसैनिकभटान्नाशयन् झालावारम-हीपतिः प्रतापस्याभिन्नहृदयः सुहृद् मन्नासिंहः प्रतापस्य सविध-मागत्य तदीयचिह्नभूतं छत्रं गृहीत्वा स्वयमधारयत्, अकथयच्च प्रतापम्, 'अपसरतु भवान्संग्रामभूमेः। त्वयि जीवति स्वातन्त्र्यमधिगमिष्यति मेवाडः। आर्यस्थितिरपि चिरं स्थास्यति। अन्यथा अद्यैव मेवाडपदे निबध्यते दासताश्रृङ्खला।

अक०—साधु तेन तर्कितम्। ततस्ततः ?

चारः—ततः प्रतापो मेवाडाधिपस्य चिह्नं हैमं छत्रं परित्यज्यापि त्वदीयभटांश्छेत्तुं प्रावर्तत । परमसौ स्वल्पेनैव कालेन मुमूर्षोश्चेतकस्य गतिं, शतशो विद्धं शरीरं चावलोक्य संग्रामभूमेरपासरत् । त्वदीयभटाश्च मन्नासिंहं निपात्य—'हतः प्रतापः, जितमस्माभिः' इत्युदघोषयन् ।

अक०—स्थाने भ्रान्ताः सैनिकाः । ततस्ततः ?

चारः—ततस्तदीयभटास्ततोऽप्यधिकतरेणोत्साहेन अयुध्यन्त । एतदवलोक्य युष्मद्भटैरवगतम् नायं हतः प्रताप इति । तस्मिन्नेव क्षणे सेनाया बहिर्गच्छन्तं प्रतापं तदनुधाविनौ सादिनौ तयोरप्यनुधाविनमश्वारोहिणं शक्तिसिंहञ्चावलोक्य अवश्यमेव प्रतापो निगडितो हतो वा समेष्यतीति सर्वे निश्चितवन्तः । शुभवृत्तान्तमिमं श्रावयितुमहमिहायातः ।

अक०—दिष्ट्या सत्यं स्यात्ते वचनम् । ( पटीक्षेपः )

( ततः प्रविशति सादिनौ निहत्य प्रतापमाह्वयन् शक्तिसिंहः । )

शक्ति०—भो भो नीलाश्वारोहिन् ! तिष्ठ तिष्ठ ।

प्रतापः—( परावृत्य स्वगतम् ) आः ! शक्तिरेषः ।

आपद्गतं नष्टसुहृत्सपक्षमेकाकिनं निर्जनभूमियातम् ।
निहन्तुमेवायमुपागतो मां शत्रुर्विपक्षाश्रयणादिदानीम् ।३२।

( प्रकाशम् )

रे रे निर्घृण ! देशघातक ! कुलाङ्गार ! क्षमालाञ्छन !
स्वं सज्जीकुरु कुन्तमेष निपतत्यूर्ध्वं प्रतापः क्षणात् ।
हत्वा त्वामवनेर्निरस्य कलुषं त्वत्पापशुद्धिं चर—
न्नात्मज्ञातिविपक्षपक्षचरणाद् गर्वं तवोच्चूर्णये ॥३३॥

( शक्तिसिंहः प्रतापवचनं शृण्वन्नेव खड्गं कुन्तं च दूरतः क्षिप्त्वा हयादवरोहति । )

शक्तिसिंहः—( साश्रुकण्ठम् ) भ्रातः ! क्षमस्व ममापराधम् । बाढमहं देशद्रोही ।

न दासतां गच्छतु मातृभूमिस्तदर्थमेतान्भवतः सपत्नान् ।
संग्रामभूमौ पतितान्निरीक्ष्य त्वदर्थमेवाप्लवते मनो मे ।३४।

( इति प्रतापपदे निपत्य रोदिति । )

( प्रतापस्तदाकर्ण्य त्वरितमश्वादवतरति )

प्रता०—(स्वगतम् ।)

अहो व्याकुलितस्वान्तः शक्तिसिंहः सहोदरः ।
मा तप्त चिरमित्येष वक्षसाऽऽलिङ्ग्यते मया ॥३५॥

( इत्यालिङ्गति । )

शक्ति०—भ्रातस्त्वदीयश्चेतको मुमूर्षुरिव प्रतिभाति ।

प्रता०—अत एव संग्रामभूमेरपसृतोऽस्मि ।

( चेतकः साश्रुनयनः प्रतापं पश्यन् निपत्य पञ्चत्वं गतः । शक्तिः सानुनयं प्रतापाय स्वाकीयमश्वमर्पयति । )

प्रता०—त्वां पादचारिणं प्रेषयितुं नाहमुत्सहे ।

शक्ति०—( दूरतो दर्शयन् )एतौ हयौ एनयोरन्यतरेण गमिष्यामि ।

प्रता०—कुत एतावत्र ।

शक्ति०—सेनातो निर्गच्छन्तं त्वामवलोक्य म्लेच्छसादिनौ हन्तुमनुधावितौ । एतदवलोक्य अहमपि द्रुततरं तावनुगत्य अन्तरैव हत्वा च तव चरणयोः प्राप्तः । अधुना स्थानान्तरमपसरतु भवान् । कदाचिच्छत्रुसैनिका मद्विलम्बात्संदिहाना इहागच्छेयुः । अतः परं त्वरितमेवाहं दासताश्रृङ्खलां भङ्क्त्वा त्वामुपैष्यामि ।

( प्रतापः शक्तिसिंहाश्वमारुह्य निष्क्रान्तः । शक्तिश्च रणभूमिं गच्छति । )

( पटीक्षेपः । )

मानः—( ततः प्रविशति ससैन्यो मानसिंहः । आगच्छन्तं शक्तिमवलोक्य । ) शक्ते ! अपि निहतः प्रतापः ?

शक्ति०—नैव, किन्तु तेनाश्वसादिनौ निहत्य मम युध्यमानस्याश्वमपि निपात्य पलायित इति तयोरन्यतरेणाश्वेनाहमागतोऽस्मि ।

( नेपथ्ये )

आरुण्यं गगनाङ्गने समुदितं मुष्णात्प्रतीच्या मुखात्
क्षोण्यां धावदशेषवस्त्वपहरत्प्राचीपदादुद्भवत् ।
ज्ञानं चाप्यपसारयत्स्वपरयोः शान्ति समुत्पादय-
न्नीलैर्लिम्पदिवान्तरं गताभिदं ध्वान्तं समुज्जृम्भते ॥ ३६॥

मानः—( आकर्ण्य ) समुपस्थिता रजनी । वाद्यतां विजयपटहः ( इति तदाज्ञया कश्चित्सैनिको विजयपटहं वादयति । )

( इतश्चन्दावतसेनापतेराज्ञया प्रतापसैनिकोऽपि विजयपटहं वादयति । )

( पटीक्षेपः । )

( ततः प्रविशत्यजमेरपत्तने स्वशिविरे एकाकी सचिन्तोऽकबरः । )

अक०—धृतो भटैः स्याद् यदि वा हतोऽयं
संतापकारी कुटिलः प्रतापः ।
ततो भवेद्राज्यमखण्डमेतत्
सुखी परं स्यामपि सार्वभौमः ॥३७॥

कथं समरभूमेर्नाद्यापि प्रतिनिवर्त्तन्ते सैनिकाः । अहो मानोऽपि चिरयति । किमसौ प्रतापो निःसृतः, किं वा रात्रौ पुनः संग्रामः प्रवृत्तः । ( दक्षिणतोऽवलोकयन् । )

एतद् भूमिपरागराजिकपिशच्छायं नभो दृश्यते
भूयो भूय इव क्षमातलसमुद्भूतो ध्वनिः श्रूयते ।
आगच्छंश्च शनैर्मदोग्रकरटिव्यूहः परिज्ञायते
नूनं मानसलीमशक्तिसहितैः सैन्यैः समागम्यते ।३८।

( ततः प्रविशति शाहवाजमानसिंहसहितः सलीमः । )

सलीमः—मेवाडराजं हतमित्रवर्गं भवद्भटैश्छिन्ननखाङ्कुशास्त्रम् ।
सहायहीनं विपिनेऽतिघोरे विद्राव्य सिंहं प्रणतः सलीमः ।३९।

मानः—प्रतापगर्वविध्वंसी मेवाडध्वजहारकः ।
सार्वभौमस्य मानोऽसौ वन्दकीं कुरुते प्रभोः ॥४०॥

अक०—( साश्चर्यमिव । ) किमसौ प्रतापः पलायितः ? न धृतो न वा हतः ? । अधृतेऽहते वा प्रतापे नाहं सार्वभौमः ।

सली०—भिन्नसपक्षो हतप्राय एव सः ।

अक०—कथमसौ जीवन्निःसृतः ? श्रुतमेतन्मया मुल्तानीखुरासान्यौ भटावनुधावितौ, तदनु शक्तिसिंहश्च प्रधावित इति पुनरपि कथमसौ न धृतो हतो वा ?

मानः—शक्तिसिंहोऽपरिचित एव परावृत्त इति संभावयामि शक्तिसिंहेनैव तौ निहत्य स्वभ्राता रक्षितः ।

अक०—आम् ! संभाव्यते, संप्रति प्रतापो ग्रहीतव्यो हन्तव्यो वा, चिरकालं स्थितः पुनरुपद्रोष्यति ।

शाहवाजः—मामाज्ञापयतु महाराजः !

विजितो विधृतः परं विमुक्तो नियतेर्भोग्यतया तरक्षुरेषः ।
त्वरितं विनिपातयाम्यथैनं तव पादाम्बुजयोर्विजित्य भूयः ४१

अक०—शाहवाज ! सर्वं त्वयि संभाव्यते । गच्छ त्वरितमेव पञ्चत्रिंशत्सहस्राणि भटानादाय—

निविडविपिनमध्ये कन्दरामन्दिरे वा
शिखरिशिखरभागेऽधित्यकायां स्थितं वा ।
सकलमवनिभागं शोधयित्वा निबध्य
त्वरितमरिममुं त्वं मत्पदोरानयेथाः ॥४२॥

( ततः प्रविशति स्वानुचरभटैरनुगम्यमानः शक्तिसिंहः । )

शक्ति०—जयत्येकलिङ्गेश्वरः ।

मानः—( स्वगतम् ) कथमसौ एकलिङ्गेश्वरस्य जयमुद्घोषयते, मन्ये विरक्त इति ।

अक०—कथमसौ प्रतापो विनिःसृतः ? कथं वा त्वया परित्यक्तः ?

सखी०—सत्यं कथय, अभयं ते ।

शक्ति०—तौ भटौ निहत्य मया प्रतापो रक्षितः ।

( सर्वे साश्चर्यं शक्तिसिंहमवलोकन्ते । )

सखी०—कस्मादसौ रक्षितः ?

शक्ति०—सालुम्बतातो निहतः समक्षं
निलीयमानैः सुभटैस्त्वदीयैः ।
रुग्णो विषण्णोऽथ पलायमाने-
ऽनुधावनं क्रौर्यमिदं न शौर्यम् ॥४३॥

सखी०—किमस्मत्पक्षाद्विरक्तोऽसि ?

शक्ति०—बाढम् ।

सखी०—तर्हि यथेच्छं गच्छ । अभयं ते ।

शक्ति०—समरैकव्रतानां मृत्युनिर्भयाणां भटानां कुतो भयम् ?

( इति ब्रुवन्नेव सानुचरभटो निष्क्रान्तः । )

सखी०—युक्तं मानेन तर्कितम् ।

मानः—मया तदाकृत्या चेष्टया चावगतम् । भवता युक्तमेव कृतम्, यदसौ निस्सारितः । अन्यथा पितृवधरोषाद् तप्तः सन् कमप्याक्रामेत् ।

अक०—यावदसौ प्रतापसाहाय्याय समुपतिष्ठते ततः पूर्वमेव प्रतापो ग्रहीतव्यः । अन्यथाऽस्य साहाय्येन स प्रबलो भविष्यति ।

शाहवाजः—कोऽसौ वराकः ?

द्वित्रैर्दिनैस्तं विनिपात्य चैनं बद्ध्वाऽऽगमिष्यामि भवत्पदाब्जम्
कोऽयं वराकः किमु वा प्रतापो रणे धृतासौ मयि वर्तमाने ।४४।

अक०—तर्हि नेदानीं कालः प्रतीक्षितव्यः ।

सखी०—इदानीं वर्षाकालः संवृत्त इति किञ्चित्कालानन्तरमेवाभियातव्यम्, अन्यथा पर्वतीयनद्यादिभिर्महती हानिः, दूरे च विजयाशा ।

अक०—( मानस्याभिमुखं पश्यन् ) मानसिंह ! किमत्र युज्यते ?

मानः—युक्तमेव सलीमस्तर्कयति ।

अक०—शाहवाज ! एवमेव भवतु । प्रतीक्षस्व तावद्वर्षाकालम् ।

( ततो निष्क्रामन्ति अकवरप्रभृतयः पटीक्षेपः । )

( ततः प्रविशति प्रतापः, विभवतश्च परिवारः । )

शक्तिसिंहः समुपसृत्य ।

शक्ति०—मातृभूमेः समुद्धृत्यै गृहीतासिव्रतस्य ते ।
कनीयान् सोदरः शक्तिः प्रणतः पादपद्मयोः ॥४५॥

(इति प्रणम्य तालिकां समर्पयति । प्रतापः सस्नेहमालिङ्ग्य पार्श्वे समुपवेश्य । )

प्रता०—वत्स ! कीदृगियं तालिका ?

शक्ति०—भवत्सविधमागच्छता मया विचारितम्, प्रभोः समीपे रिक्तपाणिना नैव गन्तव्यमिति, ततः 'किंसरूर' दुर्गं विजित्य मेवाडध्वजं तत्रारोप्य कतिचिद्भटांश्च तद्रक्षार्थं नियुज्य आयातोऽस्मि । इयं च तदुद्घाटनतालिका ।

प्रता०—प्रसन्नोऽस्मि तवैतेन कृत्येन, संप्रति तद्दुर्गं तवैवाधिकारे तिष्ठतु ।

( इति तालिकां ददाति )

शक्ति०—किमतः परं युद्धाद्विराममभिलषन्ति महाराजाः ।

प्रता०—असंभावितमेतत्—

यावन्म्लेच्छपतेः समिद्धमखिलं गर्वं न संचूर्णये
यावत्तं स्वकृतौ विलक्षमवशं सन्धौ न संपातये ।
यावच्चाप्यभिमानमुन्नतमहं मानस्य नोन्मूलये
तावद् युद्धसमुद्यमात्स्वहृदयं स्वप्नेऽपि नोच्चालये ॥४६॥

शक्ति०—एतदेव युज्यते । अहं तु भवतामनुचर एव । यावज्जीवं युद्धाय समुपस्थास्ये ।

प्रता०—साधु साधु !

( ततो निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके चतुर्थोऽङ्कः ।

# पञ्चमोऽङ्कः ।

( ततः प्रविशति कस्याञ्चिदरण्यान्यां प्रतापं मृगयमाण इन्द्रपुराधिपतिः । )

सामन्तः—( तत्र कञ्चन भटमवलोक्य, स्वगतम् । ) नूनमनेन प्रतापसैनिकेन भाव्यम् । को वाऽन्य एकाकी एवंभूतायामरण्यान्यां भ्रमितुं शक्नोति । अस्तु, तावदाभाषणेन प्रत्येमि । ( चिरं निर्वर्ण्य ) अहो अयं प्रतापसहायको रुद्रसिंहभटः । ( प्रकाशम् ) भो रुद्रसिंह ! जयत्येकलिङ्गेश्वरः ।

रुद्रसिंहः—अहो इन्द्रपुराधिपतिः ! जयत्येकलिङ्गेश्वरः ।

साम०—कुत इदानीमायातोऽसि ?

रुद्र०—आगरानगरात् ।

साम०—श्रूयते प्रतापो रणात्कातरः क्वचित् पलायितः ।

रुद्र०—नहि नहि, सोऽद्यापि स्वातन्त्र्यदेवतामाराधयति । परं तद्वृत्तान्तोऽतिकरुणः ।

साम०—कीदृशोऽसौ ?

रुद्र०—शृणु तावत्संक्षेपेण । अकबरभटेषु गोगन्धपर्वतमवरुध्य स्थितेषु ससामन्तः प्रतापः किञ्चित्कालं युद्ध्वा कोमलमीरपर्वतमगच्छत् । इतो रात्रौ शिविनीसिंहः प्रतापसामन्तः स्वभटैः सार्द्धं तमस्येव सहस्रशो यवनभटांश्छिन्दन् मार्तण्डमण्डले निर्गते तदपि विभिद्य परमं स्थानं गतवान् ।

साम०—तद्दुर्गमभेद्यमिति श्रुतम्, तत्कथं मुक्तम् ।

रुद्र०—तत्कातर्याद्भिया वा नैव मुक्तम् । किन्तु अभेद्यमेतद् दुर्गमिति मत्वा हताशाः सर्वे यवनसैनिका यदा परावर्तितुमुन्मुखा अभ-

वंस्तदा अर्बुदेशो जलस्थानेषु विषप्रक्षेपणाय यवनसेनापतिं प्राबोधयत्, जलस्थानानि च व्याजिज्ञपत् ।

साम०--अनेन देवराजेन तु आर्यमर्यादाविलोपाय जयचन्द्र एवानुकृतः ।

रुद्र०—अनेन हतकेन तु ततोऽप्यधिकतरं कृतम् ।

तद्वर्गीयसुतां हठाद् यदहरत्सोमेश्वरस्यात्मजो
यातस्तेन च कान्यकुब्जनृपतिः प्रात्यन्तिकं वैरतः ।
हा किं देवल ! ते पितुः स्थितिपतिः शान्तः प्रतापोऽहरद्
यत्त्वं तं परिहाय हा क्षितिपतिं म्लेच्छाधिपं प्राप्तवान् ॥१॥

साम०—ततस्ततः ?

रुद्र०--ततस्तद्विषेण शतशः संभावितयोद्धारो विनष्टाः । तृषितं पुत्रमित्रकलत्रभृत्यादिकं चावलोक्य साश्रुनयनः सोच्छ्वासं प्रतापः "हा दुर्दैव ! किमिदं ते दुर्विलसितम्, कथमत्र तृषिताः स्थातुं शक्नुमः, हा एते सहस्रयोधिनो योद्धारो विषेण विनष्टाः, सालुम्बादयस्तु न शोच्याः, यद् वीराणां रणे मरणं प्राकृतिकमेव, एते मदर्थमकारणमेव विनष्टा इति बहुतरमशोचीत् ।

साम०—ततस्ततः ?

रुद्र०—ततः किमन्यत् । तदेव जातं यद् दुर्दैवस्येष्टम् ।

गरलममृतमध्ये कृष्णचित्तोऽर्बुदेशो
यवनपतिसहायः क्षेपयामास सेर्ष्यः ।
नरपतिरथ हित्वा स्थानमेतत्प्रतापो
विपदि पदमनैषीदात्मधैर्यं बुभुत्सुः ॥ २ ॥

ततः प्रतापस्तत्स्थानं हित्वा पुत्रकलत्रादींश्चन्दावतसेनापतिरक्षितान् सूर्यमलदुर्गं प्रैषयत् । स्वयं च चविन्दापर्वते स्थितो भिल्लैः सार्धं पर्यटन्नितस्ततः प्राप्तान् यवनभटानवधीत् ।

साम०—ततस्ततः ?

रुद्र०—ततो यवनपतिः 'यदि प्रतापो नैव गृह्यते तर्हि तस्य पुत्रकलत्रे सुतां

वा गृह्णन्तु। तद्ग्रहणे स स्वयमेव संतप्तः समेष्यति' इत्याज्ञां प्राहिणोत्।

साम०—आः! सर्वथा अन्यायोऽयम्, योद्धृषु कलत्रबालपुत्रादिष्वाक्रमः कथं तेनाङ्गीकृतः?

रुद्र०—केनापि प्रकारेण शत्रुं वशमानयेदेष एव तस्य मार्गः।

साम०—ततस्ततः?

रुद्र०—ततः कतिचिद्यवनभटाः प्रतापकलत्रादीनां स्थितिं परिज्ञाय तत्स्थानमरुन्धन्। अन्ये सर्वे तं पर्वतमवरुध्य तथा अतिष्ठन् यथा प्रतापो नैव निःसरेत्।

साम०—ततस्ततः?

रुद्र०—ततो बहुकालमवरुद्धा भटाः प्रतापकलत्रादीनां रक्षोपायमपश्यन्तस्तान् रात्रौ भीमगढेऽनैपुः। ततो निश्चिन्तमयुध्यन्त। सहस्रशो यवनभटा विनष्टाः, परमन्ततो दुर्गं यवनानां हस्तगतमभूत्।

साम०—ततस्ततः?

रुद्र०—ततो बहुतरसेनाविनाशेऽपि न किञ्चिदुपलब्धमिति खिन्ना यवनसेना पुनः प्रतापकलत्रस्थानं परिज्ञाय भीमगढमाक्रामत्। तत्रापि बहुकालपर्यन्तं तत्रस्था भटा अयुध्यन्त। अथ निपतनासन्नं दुर्गमवलोक्य चतुर्दशवर्षदेशीयं चन्दनसिंहं सेनापतिं नियुज्य तद्दुर्गाधिपतिः प्रतापकलत्रादिकमन्यं सुरक्षितपर्वतमनयत्।

साम०—अतिकष्टतरमेवं स्थानात्स्थानान्तरगमनम्। हा दैव! कियदधिकं प्रतापधैर्यं परीक्षितव्यम्। मम तु श्रुत्वैवोद्विजते चेतः। ततस्ततः?

रुद्र०—ततस्तस्य बालस्य महाश्चर्यकरं युद्धमवलोक्य सर्वेऽपि भटास्तं प्रशशंसुः।

किं रामचन्द्रस्य सुतः कुशोऽयं
किं वा लवो युद्धकलाप्रवीणः।

किं वाऽऽर्जुनिर्वीरवरोऽभिमन्यु—
बालोऽपि यो हन्ति सुवीरसंघान् ॥३॥

साम०—युक्तमेव तस्य तादृक् शौर्यम् ।

रुद्र०—सकलोऽयं मेवाडाधिपतेः प्रतापस्यैव प्रभावः ।

साम०—एवमेवैतत् । ततस्ततः ?

रुद्रः—ततः —

गच्छत्येष समेति चैव निपतत्येष प्रयाति क्षणात्
रुन्धे हन्ति निपातयत्यथ भटान्संमर्दयन् राजते ।
यश्चाग्रे समुपागतः स विगतो यस्य द्विषन्तोऽप्यहो
शौर्यं संस्तुवते तमेव सुभटं कश्चिन्निलीयाच्छिनत् ॥४॥

साम०—ततस्ततः ?

रुद्रः—ततः क्रमशो वनपर्वतकन्दराद्दुर्गाधित्यकोपत्यकादिषु यवनैरधिकृतेषु भिल्लभटसुरक्षितकलत्रपुत्रकन्यकोपेतश्चन्दावतादिप्रधानभटैस्सहितः प्रतापो मृगवृकवराहशार्दूलमर्कटशृगालखड्गमार्जारगवयशल्यसंकुलं भृङ्गतन्तुवायवृश्चिकभुजङ्गपिपीलिकाशतपदकर्णशलाकिकागोधेरदंशमधुमक्षिकाविषस्तूपिकादिव्याप्तं पीलुपलाशपिप्पलप्लक्षपर्पटीप्रियालुपट्टीपुष्पप्रियकपिच्छिलापूतिकपाटलाप्रियङ्गुपिचुमन्दनिविडं काकोलूककपोतकुक्कुटचटकखञ्जरीटबककोकिलरथाङ्गकुररमयूरतित्तिरिचकोरवर्तकादिविविधपक्षिगणसंयुतं जावराप्रान्तीयपर्वतारण्यं प्राविशत् । प्रविशन्तं च तं विहाय अहमकबरवृत्तपरिज्ञानाय आगरानगरं गतवान् ।

साम०—एहि । आवां गत्वा प्रतापमुद्बोधयिष्यावः ।

( इति वदन्तौ वने प्रविष्टौ । )

( पटीक्षेपः । )

( तत प्रविशति शिलातले निषण्णः सचिन्तः प्रतापः । )

( सुतायाः चीत्कारमाकर्ण्य खड्गमाकृष्य )

प्रतापः—आः क एष मे सुतामभिभवति ।

रे नीच ! तिष्ठ शमनातिथितां नये त्वां
क्वैष प्रयास्यसि दृशोर्विषयागतो मे ।
शक्रोऽपि रक्षितुमिह क्षमते न हि त्वां
नैवासि चेच्छ्रुतिभवात्समयादवध्यः ॥५॥

( किंचिद्गत्वा आकृष्टखड्गस्तिष्ठन्विलोकते । ) आः ! विडालोऽस्याः करपट्टिकामपहृतवान् । ततोऽतिक्षुधिता रोदिति । (उच्छ्वस्य) हा दैव ! गोब्राह्मणभक्तिपरायणस्य दीनदुःखनिवारकस्य ममापि शिशवः क्षुधया रुदन्ति । हा भारतवसुन्धरे ! सर्वतः सस्य-संपूरितायामपि त्वयि मदीयसुता अन्नेन विना खिद्यन्ते । किं करोमि, वृथैवाडम्बरोऽयम् । किं तावत्सन्धिमेवाभ्यर्थयेय ( इति विमृशन्नुपविशति । ततः प्रविशति मात्राऽनुगम्यमाना रुदती बालिका ।
बालिका (पितुरुत्सङ्गे निपत्य) 'पितः ! रोटिकां देहि रोटिकां देहि' ( इति रोदिति । )

प्रतापः—( सचिन्तम् )

सालुम्ब्रे निहतेऽप्यभिन्नहृदये मन्नासखे स्वर्गते
युद्धे चापि पराजये गिरिगुहाकान्तारभूमौ भ्रमे ।
क्षुत्तृड्भ्यामतिपीडनेऽप्यनुदिनं धैर्यं न यत्काम्पितं
खिन्नामद्य सुतां विलोक्य रुदतीं हा हन्त तल्लीयते ॥६॥

भद्रे ! मा रोदीः, आनयामि ते रोटिकाम् ( इत्याश्वासयति । )
( बाला पितुरुत्सङ्गान्मातुरङ्के निपत्य ) मातः ! क्षुधिताऽस्मि देहि मे रोटिकामिति उच्चैः स्वरेण रोदिति । )

प्रतापपत्नी—वत्स ! मा रोदीः । दास्यामि ते रोटिकाम् ।
( इति परिलालयति । )

प्रतापः—मिथ्याभिमानकलया समुपार्जितं किं
कान्तारदुःखसहनेन समागतं किम् ।

ताम्यन्तमद्य विपिने स्वकुटुम्बवर्गं
शक्तो न रक्षितुमतो विदधामि सन्धिम् ॥ ७ ॥

( इति विमृश्य कन्यकां लालयन् ) वत्से ! मा रोदीः, आनयामि ते रोटिकाम् । नातः परं ते दुःखं भविष्यति ।

( इति मसीं पत्रं चानाय्य सन्धिपत्रं लिखति । वाचयति च । )

गिरिकान्तारदरीषु भ्राम्यन् परिवारदुःखभारार्तः ।
संधित्सति त्वया सह साँगापौत्रः प्रतापोऽयम् ॥८॥

( विचिन्त्य का गतिः, प्रेषयामि पत्रमिदं यवनराजाय । इति पत्नीपुत्रीभ्यामनुगम्यमानो निष्क्रान्तः । )

( पटीक्षेपः । )

( ततः प्रविशति मानप्रभृतिसामन्तसहितोऽकबरः । )

अकबरः—( स्वगतम् ) कथमद्यापि आरण्यको गज इवोच्छृङ्खल एवास्ते प्रतापः ।

( ततः प्रविशति दौवारिकेण सह पत्रहस्तः प्रतापदूतो भिल्लराजः, प्रविश्य अकबरहस्ते पत्रं समर्पयति । )

अकबरः—गिरिकान्तारेत्यादि ( उच्चैः पठित्वा सहर्षम्, ) अद्यास्मि सार्वभौमः । वाद्यतां विजयपटहः, प्रवर्त्यतां च महोत्सवः ।

पृथ्वी०—( प्रविश्य ) महाराज ! कस्यायं महोत्सवः ?

अक०—( पत्रं ददाति । )

पृथ्वी०—( पठित्वा ) मायिकमेतत् । भवतः क्षणिकसंतोषार्थं तद्वैरिणा केनापि कल्पितम् ।

अक०—तर्हि पुनः पत्रं लिखित्वा प्रत्येतु भवान्, तद्दूतश्च तावदारक्षकरक्षितस्तिष्ठतु ।

पृथ्वी०—एवं भवतु ( इति पत्रं लिखित्वा पठति । )

आश्लेषपूर्वं वदतोऽपि चित्तं
न निर्णयं मे समुपैति कश्चित् ।

सन्धौ विरुद्धस्य दलं नु किंवा
तवेति नो वाक्यमथोत्तरेस्त्वम् ॥९॥

सन्धावपूर्वत्रिदशानुभूतिः
कान्तो यशोऽङ्के कमलानुगन्धः ।
अमध्यमं भास्करमेव मत्वा
द्रक्ष्यन्ति लोकाश्च सविस्मयं त्वाम् १०

लीलासंमीलितेन्दुं तुहिनहिमगिरिक्षीरताराब्जकान्त-
ज्योत्स्नानागेन्द्रशङ्खार्जुनकुसुमसुधाजाह्नवीर्निह्नुवानाम् ।
त्रैलोक्ये द्योतमानां निखिलबुधजनैः स्तूयमानां स्वकीर्तिं
हित्वा किं विग्रहार्थं त्रिदशसुखमनादृत्य यास्यात्मनाशम् ॥११॥

( पत्रं गृहीत्वा निष्क्रान्तः पृथ्वीसिंहदूतः । पटीक्षेपः । )

( ततः शिलातले निषण्णः सामन्तसमन्वितः प्रतापः । )

प्रता०—( सोद्वेगमुच्छ्वस्य ) अहो क्षणिकसुखलिप्सया मया महदनुचितमाचरितम् ।

सन्धिप्रार्थनया सर्वं नाशितं सुमहद् यशः ।
आः ! स्वहस्तेन पदयोः पातिता दास्यशृङ्खला ॥१२॥

चन्दावतः—महाराज ! कुतोऽयमुद्वेगः, प्रतीक्षस्व तावत्किमयं सन्धौ कथयति ।

प्रता०—ममाभिमतानुरूपसन्धिस्वीकारेऽपि महदेव कष्टम् ।

सन्धिप्रपन्नं नतकन्धरं मां
निरुद्धवीर्याहिमिवोच्छ्वसन्तम् ।
विलोक्य ते मानसमानभावाः
सभागताः स्मेरमुखा भवेयुः ॥ १३ ॥

एतदनादरसहनान्मरणमेव श्रेयः (इति महतो दुःखात्पुनरुच्छ्वसिति ।)

इन्दारेसामन्तः—महाराज ! अलमावेगेन।

याव‌द्भीमभुजाप्रमर्दितगजाः संग्रामशौण्डाः क्षणा-
द्ध्वस्तोद्भूतनिशातहेतिनिहतप्रत्यर्थिवीरव्रजाः।
जीवामो वयमत्र सन्धिकरणं तावन्न ते युज्यते
संन्ध्यर्थं निपतिष्यति स्वयमसौ म्लेच्छाधिपस्त्वत्पदे।१४।

प्रतापः—कुतोऽस्यावसरः ? मया हि सन्धिप्रार्थनं कृतमेव।

चन्दा०—महाराज ! अलं विचारेण।

क्षणेनैव विधास्यामः सन्धेः सोपधिदूषणम्।
रक्षणारक्षणे तस्य त्वदधीने हि केवलम् ॥१५॥

दौवारिकः—( प्रविश्य ) जेदु जेदु महाराओ।
जयतु जयतु महाराजः।

आगराणयराओ पत्तं गहिऊण बीकाणयरजुवराअस्स पुढवी-
आगरानगरात् पत्रं गृहीत्वा बीकानगरयुवराजस्य पृथ्वी-
सीहस्स अणुअरो दुआरि चिट्ठइ।
सिंहस्य अनुचरः द्वारि तिष्ठति।

प्रता०—प्रवेशय तम्।

( दौवारिको निष्क्रम्य पृथ्वीसिंहानुचरेण सह प्रविशति। )

अनुचरः—जेदु जेदु महाराओ।
जयतु जयतु महाराजः। ( पत्रं समर्पयति। )

( पत्रमादाय पठित्वा सहर्षम् )

प्रता०—अस्मदीयं सन्धिपत्रमिति संदिह्य साधूक्तं पृथ्वीसिंहेन।

चन्दा०—तेनातिशोभनं विहितम्।

प्रता०—( तदुत्तरं लिखित्वा सर्वान् श्रावयति। )

युक्तमुट्टङ्कितं काले प्रेम्णा साधु त्वयोदितम्।
अवेहि निजपत्रस्य क्रियां केवलमुत्तरम् ॥१६॥

सर्वे—साधु साधु !

(ततः प्रतापः पृथ्वीसिंहानुचराय पत्रं ददाति, स च प्रणम्य निष्क्रामति ।)

प्रता०—( इन्दोरसामन्तं भिल्लराजं चाभिलक्ष्य )

ब्राह्मं स्वं यज्ञकार्योद्धृतमथ गणिकां हीनदीनां च नारीं
बालां सीमन्तिनीं वा पतितमपि महारुग्णमन्धं क्षुधार्तम् ।
मूर्छालं चाप्यवीरां शरणगतमथो सर्वथैतानि हित्वा
ज्ञात्वा शत्रोः प्रजानां सकलमपि धनं सर्वथा लुण्ठयध्वम् १७

( पटीक्षेपः । )

( ततः प्रविशति आगरानगरे पर्षद्युपविष्टः सामन्तादिपरिवृतोऽकबरः । )

अकबरः—मानसिंह ! कथमद्यापि पृथ्वीसिंहानुचरो नायातः । किं नाम केनापि तद्वैरिणा मम क्षणिकसुखसंपादनाय मायिकमेवेदं कृत्यं विहितमिति सत्यं स्यात् ?

मान०—संभाव्यते, निश्चयस्तु पृथ्वीसिंहानुचरागमन एव भविष्यति ।

अक०—मानसिंह ! तावत्प्रतापदूतमानय, संप्रत्येव निश्चेष्यामः केन कुतः स्थानात्पत्रं दत्तम् ।

( मानसिंहो निष्क्रम्य आरक्षकाधिपतिना सह प्रविशति । )

आरक्षकाधिपतिः—जयतु जयतु महाराजः ।

अक०—कुत्र प्रतापदूतः ?

आर०—स च तस्मिन्नेव दिवसे अत्रभवद्भिर्मुक्तः ।

( इत्याज्ञापत्रं दर्शयति । )

अक०—संवदन्ति मदीयैरक्षरैरिमान्यक्षराणि । कस्येयं माया स्यात् ?

मानसिंहादयः—भवदीयानीवेमान्यक्षराणि । बाढं स चतुरो मायिकः ।

( ततः प्रविशति स्वानुचरसहितः पृथ्वीसिंहः )

पृथ्वी०—जयति योगमाया । ( यथास्थानमुपविशति । )

अक०—( सस्मितम् ) किमुक्तं त्वदीयेन मेवाडाधिपतिना प्रतापेन ।

( पृथ्वीसिंहः प्रतापपत्रं दर्शयति । )

अक०—'अवेहि निजपत्रस्य क्रियां केवलमुत्तरम्' (इति पठन्सर्वान् श्रावयति।)

मान०—नैतावताऽवगम्यते, सन्धिक्रिया विरुद्धक्रिया वा ।

( अत्रान्तरे प्रविशति संभ्रान्तः पुर्तगालराजस्य दूतः । )

दूतः—( रुदन् ) महाराज ! लुण्ठितोऽस्मि ।

अक०—कस्त्वम् ? केन लुण्ठितोऽसि ?

दूतः—महाराज ! पुर्तगालराजेन त्वदर्थमुपायनीभूतानि बहुमूल्यानि रत्नानि प्रेषितानि, तानि गुर्जरप्रान्ते लुण्टाकाः 'भारतेश्वरः प्रतापस्तस्यैवेदमुपायनम्' इत्युक्त्वाऽलुण्ठन् ।

( ततः प्रविशन्ति श्रेष्ठिनः प्रजाजनाश्च । )

श्रेष्ठिनः—हा ! हताः स्मः, वयं सर्वे लुण्ठिताः ।

अक०—कैः ?

श्रेष्ठिनः—स्वस्वामिनं भारतेश्वरं घोषयद्भिः प्रतापानुचरैः ।

प्रजाजनाः—हा ! हताः स्मः, अस्माकं सर्वस्वमेव लुण्ठितम्, वयमेकवसना एव कृताः स्मः ।

अक०—कैः ?

प्रजा०—आत्मनः प्रभुं प्रतापं भारतेश्वरं घोषयद्भिर्भिल्लमीणादिभिः ।

पृथ्वी०—( अकबरमभिलक्ष्य ) महाराज ! मन्ये इयमेव क्रिया तत्पत्रोत्तरं स्यात्

अक०—अथ किम् । इयमाक्रमणक्रिया तदुत्तरम् । मन्ये पूर्वपत्रं न तेन लिखितम् ।

पृथ्वी०—अथ किम् ।

अक०—मानसिंह ! धिक् त्वाम्, बहुतरद्रव्यनाशेऽपि नायं प्रतापस्त्वया धृतः । मिथ्याभिमानिना त्वया किं तस्य कृतम् । त्वदर्थे एव मया तेन सह वैरायितम् । अपेहि, यावत्प्रतापस्त्वया न निगृह्यते, न वा मेवाडान्निस्सार्यते तावन्नागन्तव्यम् ।

( मानः किञ्चिद्वक्तुमभिलषन् स्थितः । )

अक०—( सक्रोधम् । ) याहि याहि ।

मानः—( स्वगतम् । ) ज्ञातिद्वेषफलमिदम् । यत्सर्वसमक्षं शुनक इव तिरस्कृतोऽस्मि । ( प्रकाशम् । ) धैर्यमवलम्ब्यतां कञ्चित्कालम् ।

अक०—

लुण्टाकैः सकलोऽस्मदीयविषयः संत्रास्यते दुर्जनैः
सर्वस्वं ह्रियते प्रजाजनगतं जीवाम्यकिञ्चित्करः ।
एकेनैव वनेचरेण विषमामालम्ब्य वृत्तिं बलाद्
राज्यं पूर्णमराजकं कृतमतो धैर्यं मयि स्यात्कथम् ॥१८॥

यः प्रतापं निगृह्णीयात्स मम राज्यकरस्य दशमांशभागी स्यात्। ( किञ्चिच्छान्तः ) मानसिंह ! गच्छ त्वं यथेच्छं साहाय्यमादाय प्रतापं तस्य पुत्रं कन्यकां वा गृह्णीयाः ।

मान:—यदि मेवाडं परित्यज्य नासौ पलायते तदैनं ग्रहीष्यामि, हनिष्यामि वा ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके

पञ्चमोऽङ्कः ।



# षष्ठोऽङ्कः ।

( ततः प्रविशत्यधित्यकायां स्थितो मन्त्रिसमन्वितः प्रतापः । )

प्रता०—( सचिन्तम् ) श्रूयते महता बलेन मानप्रभृतयः सन्नह्याक्रामन्ति ।

चन्द्रा०—एवमेवैतत् ।

मानोऽपमानाद्धनलिप्सयाऽन्ये
स्वान्तेन न स्वान्तमपि स्मरन्ति ।
अन्वेषयन्त्यद्रिगुहान्धुशाखि-
ष्वधित्यकोपत्यकयोर्भवन्तम् ॥१॥

( ततः प्रविशति मुकुलितहस्तो निःश्वसन् भिल्लराजः । )

भिल्लराजः—महाराअ ! गहीओ ।
महाराज ! गृहीतः ।

प्रता०—किं मानः शाहवाजो वा ?

गुहः—णहि णहि, अम्हाणं गमणागमणमग्गो । माणप्पहिइसंरक्खिया पलयसमुद्दणिणदणिग्घोसा चविन्दाभीमगढकोमलमीराइट्टाणेसु विअत्ता दुग्गवणपव्वयकन्दरारुक्खवसुहाहिच्चगुवच्चगाइसु सव्वओ पसरमाणा अगवरसेणा इओ णाइदूरे ठिआ ।
नहि नहि, अस्माकं गमनागमनमार्गः । मानप्रभृतिसंरक्षिता प्रलयसमुद्रनिनदनिर्घोषा चविन्दाभीमगढकोमलमीरादिस्थानेषु व्याप्ता दुर्गवनपर्वतकन्दरावृक्षवसुधाधित्यकोपत्यकादिषु सर्वतः प्रसरन्ती अकबरसेना इतो नातिदूरे स्थिता ।

प्रता०—( सवितर्कम् )

किं दैन्यं परिहाय पर्वतगतं शत्रोर्बलं नाशयन्
नश्येयं, किमु वा निलीय कुहरे कालं नयेयं पुनः ।

किं वा मातृभुवं विमुच्य विपिने तिष्ठेयमापद्गतो
यद्वा मित्रकलत्रपुत्रसहितो गच्छेयमन्याश्रितो ॥२॥

भिल्लराज ! त्वमपि कथय, किमतः परं कर्तव्यम् ।

भिल्ल०—अहुणा इह ट्ठिओ गहिओ हविस्सइ महाराओ । अओ पव्वयच्चाओ कत्तव्वो । जीवमाणो पुणो वि महाराओ विजिस्सइ ।

अधुना इह स्थितो गृहीतो भविष्यति महाराजः । अतः पर्वतत्यागः कर्तव्यः । जीवन् पुनरपि महाराजो विजेष्यते ।

मन्त्री—महाराज ! युज्यते ।

प्रता०—तर्हि पर्वतावरोहणमार्गमादेशय ।

भिल्ल०—इदोऽवरोहउ महाराओ ।

इतोऽवरोहतु महाराजः ।

( इति सर्वेऽवरोहन्ति । )

अमरसिंहः—हा मातृभूमे ! नीतिवशात्त्वमधुना त्यज्यसे । (इति रोदिति ।) हा वसुंधरे ! पुनरपि मामनुग्रहीष्यसि ।

प्रता० पत्नी—अयि विस्संभरे ! पुणो वि सुमरिस्ससि । पुणो वि अणुग्गहेण सिग्घं सकुडुम्बं चेव इमं जणं समुवट्ठाविस्ससि ।

अयि ! विश्वम्भरे ! पुनरपि स्मरिष्यसि । पुनरपि अनुग्रहेण शीघ्रं सकुटुम्बमेव इमं जनं समुपस्थापयिष्यसि ।

( इति रुदती अवरोहति । )

प्रता०—( पुनः परावृत्त्य )

मातस्त्वदङ्कपरिवर्धितलालितस्त्वां
मुक्त्वाऽन्यदेशमयमेति विपद्गृहीतः ।
किं युक्तमत्र किमयुक्तमिति प्रभुर्नो
निर्णेतु मस्य बत संप्रति धीरधीरा ॥ ३ ॥

( इति प्रणमति। पुनः किञ्चित्परावृत्य सर्वे प्रणमन्ति। )

सेनापतिः—त्वर्यताम्! त्वर्यताम्। दूरेऽस्माकं विश्रमस्थानम्।

प्रता०—आः प्रचण्डः सहस्रभानुः।

सेना०—दारुणो भूमेः संतापः।

( ततः प्रविशति गायन्ती योगिनी। )

योगिनी—धावत धावत भजत प्रतापम्।
धर्मपरायणमिममभिरक्षत सिन्धुशरणमुपयातम्।
लोकालोकविसर्जितनिजवसुमपरविषयमनुयातम्।
रिक्तकरं शिखराधरभागे स्खलितपदाब्जनिपातम्।
प्रसृमरतमःसमागमरोषादरुणकान्तिमाधियातम्।
धूलिधूसरितमेनमनंहसमभितो नमत प्रयातम्।
अञ्जलिपूरितवसुभिरस्य हत दुरिताहितकुलजातम्।
ध्वान्तं विशति विश्वतः कुरुते सदसद्भावविघातम्॥

( सहसा परितोऽवलोक्य )

पश्यत रूपमहो परिवर्धितमखिलदिशामवदातम्।
नश्यति तम उदयते प्रतापः प्रणमत पुनरायातम्।२।

( इति हठादिव सर्वान् प्रतापानुगामिनो विदधाति। )

( ततः प्रविशति तद्ध्यानेन प्रतापानुरक्तो विह्वलो भामागुप्तः। )

भामागुप्तः—आः! क्व गतोऽसौ मे प्राणाधारः प्रतापः?

क्वासौ मत्प्रतिपालकः क्षितिपतिर्भूपालचूडामणि-
र्मां त्यक्त्वैव हहा प्रयाति विषये सिन्धौ प्रतापः कथम्।
किं स्यान्मे वसुभिः सुतेन किमु वा प्राणैश्च किं वा फलं
देशप्राणममुं व्रजन्तमिह चेन्न स्यां निरोद्धुं क्षमः॥३॥

अयि योगिनि! योगचक्षुषा पश्यन्ती त्वमेव कथय, कुत्रासौ

मे प्रतापः ?

योगिनी—पश्य । सोऽयं प्रताप इत एवाभिवर्तते ( इति दूराद्दर्शयित्वा ) 'अञ्जलिपूरितवसुभिरस्य हत' ( इत्यादि गायन्ती निष्क्रान्ता । )

अहो प्रतापः—

रोषारुणविशालाक्षस्तान्तस्वान्तः परंतपः ।
मन्ये विचारयन् किञ्चिन्मदं मन्दमुपैत्यसौ ॥ ६ ॥

भामा०—( सहसोपसृत्य ) जयतु जयतु महाराजः ( पादयोः पतति । ) ( सर्वे एकतश्छायामाश्रित्य ।)

प्रता०—अहो कोशाध्यक्षो भामाशाहः । कथय, अपि क्षेमं ते सपरिवारस्य ।

भामा०—( पादौ गृहीत्वा ) भवता परित्यक्तस्य कुतो मे क्षेमम् । (रोदिति) ( प्रतापः किञ्चिद्विचारयन्निव मौनमास्थितः । )

चन्दा०—कोशाधिपते ! इदानीं कमलासंकोचवशादप्रतिपालितचतुरङ्गसैन्यचक्रः स्वातन्त्र्यदेवताराधनार्थं सिन्धुप्रान्ते जिगमिषुर्महाराणाप्रतापः, तदनुगामिनो वयं च ।

भामा०—महाराज ! युष्मदीयकोशे चतुष्कोटिमितं धनमस्ति । तेन

उद्यद्दीप्तिप्रहरणलसद्गाढपुष्टोन्नताग्रो-
त्तुङ्गस्फूर्जद्भुजपरिवृढा धैर्यशौर्योद्धुरीणाः ।
नव्योन्मीलद्बहुरणकलास्ते सहस्राणि पञ्चा-
शत्स्युर्वीराः सुभटसुभटास्त्रिंशदब्दीं ध्वजिन्याम् ।७।

प्रता०—नाहं परकीयधनेन सैन्यं साधयिष्ये ।

भामा०—महाराज ! नैतत्परकीयम्, किन्तु युष्मत्कृपापात्रैरस्मदीयपूर्वजै राज्यकरसंचितं युष्मदनुचरैर्विलुण्ठ्यानीतं च कोशागारे निहितं युष्माकमेव ।

सेना०—युज्यते ।

चन्दा० मन्त्री—एतद्यौष्माकीणमेव । एतेन संभृतया बृहत्या वयं

सेनया युगपदाक्रम्य सर्वमपि रिपुबलं नाशयिष्यामहे। स्वल्पेनैव कालेन सर्वाणि दुर्गाणि प्रत्यावर्तयिष्यामहे च।

प्रता०—एतद्वंशपरंपरोपार्जितमित्यस्यैव सर्वम्।

भामा०—अस्माकं भवेदेतद्, युष्माकं वेति विवादः परिहीयताम्। एतत्स्वातन्त्र्यदेवपूजार्थं भवत्पादयोः समर्पितम्, यदि भवानेतन्न स्वीकरोति तदाऽहमनशनेन प्राणांस्त्यक्ष्यामि।

मन्त्री—महाराज! भवदर्थमेतन्माऽस्तु। परं विधर्मभ्यः प्रजाधर्मरक्षार्थमेतद्दीयते अयमपि भवदीय एव। अन्यथाऽयं प्राणांस्त्यक्ष्यति।

प्रता०—( भामाशाहस्य बाहुं गृहीत्वा ) कोशाधिपते! स्वातन्त्र्यदेवताराधनार्थमेतत्स्वीकरोमि। एतेन मेवाडे स्वातन्त्र्यं स्थापयिष्यामि।

उप्ता या बलिना लता हरिपदे सत्ये युगे स्वाध्वरे
सिक्ता सा शिविना दयासलिलतस्त्रेतायुगस्यान्तरे।
कर्णः पल्लवितां विधातुमभवच्छक्तश्च तां द्वापरे
सेयं साध्वमृतैः कलौ फलवती भाम्ना त्वया साध्यते ॥८॥

मन्त्री—भामा! लोकोत्तरमिदं ते कर्म।

लोके धर्मधिया ददाति कुशलः कश्चिद्यशो भावय-
न्नन्यः स्वःपदलब्धये श्रुतिविदे दत्ते सुखं चिन्तयन्।
राज्ञो रोषभिया परोऽपि ददते स्वोपायनं बोधयन्
द्वित्राः सन्ति न वा क्वचित्तव समा यच्छन्ति ये निःस्पृहम् ॥९॥

भामा०—अनुगृहीताः स्मः।

प्रता०—सेनापते! त्वं तावत्पञ्चाशतं सहस्राणि वीरभटान्सज्जीकृत्य पञ्चधा च विभज्य आक्राम, अमरसिंह! त्वमपि भिल्लराजसहितो म्लेच्छसैन्यं निपातय। अहमपि तिर्यङ्मार्गेणाक्रम्य मानं ग्रहीष्यामि।

सेना०—यथाऽऽज्ञापयति महाराजः।

( निष्क्रान्तः । पटीक्षेपः । )

( ततः प्रविशति मन्त्रिद्वितीयोऽक्बरः । )

अक०—मन्त्रिन् ! श्रूयते साम्प्रतं प्राणपणेन मानः प्रतापं निग्रहीतुमभिलषति ।

मन्त्री—संभाव्यते, अपमानप्रतिचिकीर्षया मानस्तथाऽऽचरितुं सन्नद्धः स्यात् । परं प्रतापोऽपि प्रताप एव ।

क्वासौ प्रतापः क्व च वः प्रतापः
क्व भिल्लवर्गः क्व बलं भटानाम् ।
क्व तस्य यत्नः क्व चमूप्रयत्न-
स्तथापि निघ्नत्वमयं न याति ॥ १० ॥

अक०—श्रूयते मेवाडं परित्यज्यासौ सिन्धौ प्रयातः ।

मन्त्री—यद्येवं भवेत्तदा दूरोत्सारितस्तव कण्टकः स्यात्परं विजिगीषूणां बहुविधाः प्रकारा भवन्ति । न जाने किमप्यस्य प्रयाणे रहस्यं स्यात् ।

( ततः प्रविशति मानसिंहः । )

मानः—विजयतां विजयतां महाराजः ।

अक०—क्व गतोऽसौ प्रतापः ?

मानः—मेवाडं परित्यज्य सिन्धौ प्रयात इति श्रूयते ।

अक०—दूरोत्सारितः कण्टको विनाशित एव । यतोऽसौ प्रचण्डतरमार्तण्डप्रखरकरोत्तापितस्य सलिलानुपलब्धिविशुष्कतालुरसनाकण्ठोष्ठमुखविवरस्य पुत्रकलत्रादिसकलकुटुम्बस्य नाशे स्वयं विनङ्क्ष्यति ।

मन्त्री—सर्वमपि युज्यते । परमसौ विजिगीषोरिव तस्य कश्चित्प्रकारः स्यादित्यपि संभाव्यते एव ।

एकाकी स्वबलं विहाय सहसैवाक्रम्य शत्रोश्चमूं
मुक्त्वा तां च पलायितो यदि ततः किञ्चिद्रहस्यं भवेत् ।

वीरः कातरवत्त्यजन्निजभुवं काञ्चित्क्रियामीहते
दुर्ज्ञेयं नटवच्चरित्रमितरैः प्रायो जिगीषोरिदम् ॥ ११ ॥

मानः—एवमपि संभाव्यते, प्रतापस्तु पलायित एव।

मन्त्री—अभिलषामि, सत्याः सन्तु ते गिरः।

( ततः प्रविशति सेनातः समायातश्चरः। )

चरः—जेदु जेदु महाराओ।

जयतु जयतु महाराजः।

अकः—कुत्र प्रतापः पलायित इति कश्चिदुदन्तः समागतः ?

चरः—का णु क्खु तस्स उदन्तस्स कहा, सव्वं चेव णट्ठं।

का नु खलु तस्योदन्तस्य कथा, सर्वमेव नष्टम्।

अक०—किं पतापकुटुम्बम् ?

चरः—णहि णहि तुम्हाणं बलम्।

नहि नहि युष्माकं बलम्।

अक०—किमिदं कथयति ?

चरः—सव्वं सच्चं चेव कहेमि।

सर्वं सत्यमेव कथयामि।

अक०—केनास्मद्बलं विनाशितम् ?

चरः—

ससेएणेण पदावेण विस्सओ कमियं पुणो।
ससैन्येन प्रतापेन विश्वत आक्रान्तं पुनः।
तुह सव्वं बलं हा धी ! णासिअं खणमत्तओ ॥१२॥
तव सर्वं बलं हा धिक् ! नाशितं क्षणमात्रतः ॥ १२ ॥

अक०—( मानाभिमुखं पश्यन्। ) किमसौ ब्रवीति ? ( चरं प्रति ) अये ! किमिदं सत्यम् ?

चरः—सव्वं सच्चं चेव। कहं खु अम्हारिसो मिच्छा कहिस्सइ।

सर्वं सत्यमेव। कथं खलु अस्मादृशो मिथ्या कथयिष्यति।

( ततः प्रविशत्युपसेनापतिः। )

उपसेनापतिः—( सहसोपसृत्य ) सर्वेऽपि हताः ।

अकबरः—कथम् ?

उपसे०—सहसा असंख्यैः प्रतापसैनिकैराक्रम्य सर्वेऽपि युष्मत्सैन्यभटा विनाशिताः, ( रुदन् पादयोर्निपत्य ) महाराज ! युष्मत्सेनापतेः पत्नी युष्माकं धर्मभगिनी सतनया प्रतापभटैर्गृहीता ।

अक०—कथमिदमश्रोतव्यं शृणोमि ?

( स्वगतम् )

स्वसा मदीया द्विषतः करे गता गतैव मे मूर्तिमती यशस्विता ।
न चास्ति तस्याः पुनराप्तिसाधनं जितोऽहमेतेन निपातितः पदे १३

( प्रकाशम् ) कथं सा गृहीता ?

उपसे०—प्रतापभटैः सहसाऽऽक्रम्य सकले युष्मत्सैन्ये विनाशिते आरक्षकरक्षिता सखीभिः समागच्छन्ती सेनापतेः पत्नी सतनया मार्गे एकाकिना भिल्लराजेनापत्य अन्तरैव गृहीता, आरक्षकाश्च विनाशिताः ।

अक०—सर्वमपीदमस्मद्दुर्विलासितस्य फलमुदयते ।

चिकीर्षते यद् दुरितेन पूरुषस्तदेव तत्पापफलेन सृज्यते ।
परस्य वाञ्छन्नशुभं अहिं खनन् पतत्यसौ तत्र विधेर्विलासतः १४

( स्मृत्वा ) अहह ! दारुणोऽपमानसंतापः ।

नो शान्तिः कथमप्युपैति मनसो दुःखं समुज्जृम्भते
चित्तं चोद्विजते त्रपाभरवशादात्मा क्षितौ लीयते ।
अस्मत्सैन्यपतेर्वधूः सतनया वन्यैर्यतो गृह्यते
तस्मादेव मया स्वकीयविजये वाञ्छा परित्यज्यते ।१५।

( पुनर्विमृश्य ) अलं कातर्येण ।

( स्वगतम् । ) किमयं मानस्तेनेदानीं मिलितः ? यन्मां प्रतारयन् योग्यान्मे भटान्नाशयति, किं वा तद्गतिमवगत्य स्वयमेव पलायितः ?

( प्रकाशम् । ) मानसिंह ! किमिदं जातम् ?

मानः—अस्मदागमनानन्तरं वार्षिकमण्डूकवन्न जाने कुतस्तत्सैन्यं संजातम् ।

( ततः प्रविशति लाभपुरादायातश्चरः । )

चरः—जेदु जेदु देओ ।

जयतु जयतु देवः ।

महाराअ ! लाहोरसामंतो तुम्हाणं पडिपंथी संजाओ, सो अ

महाराज ! लाभपुरसामन्तो युष्माकं परिपन्थी संजातः, स

आकमंतो इदो चेव आगच्छइ ।

चाक्रामन्नित एवागच्छति ।

अक०—अपमानो मया पूर्वमश्रावि दृपदात्मना ।

इदानीं श्रूयते राज्यच्छेदोऽपि किमतः परम् ॥१६॥

कथय अन्यदपि यदनिष्टं स्यात्, हृदयमवलम्ब्य सर्वमपीदानीं श्रोतुं सन्नद्धोऽस्मि ।

( पुनर्विमृश्य )

सेनापतेराप्तकुटुम्बवर्गं पूर्वं रिपोः किन्तु समुद्धरेयम् ।

किं वा द्विषन्तं कलयेऽभियान्तं सामन्तमेनं खलु दण्डयेयम् १७

अथवा उभयमपि संपादनीयम्, नेदानीं कालातिपातः कर्तव्यः ।

( ततः प्रविशति शाहवाजः )

शाह०—जयतु जयतु महाराजः ।

अक०—त्वं यथेच्छं सन्यं सज्जीकृत्य प्रतापं निगृह्णीयाः ।

ससूनुमेनं मददुर्विदग्धं मलिम्लुचं क्षीणबलं द्विषन्तम् ।

खलप्रियं दुर्गवने भ्रमन्तं निहत्य तस्य प्रमदां हरध्वम् ॥१८॥

मन्ये एवं कृते स्वान्ते शान्तिः स्यात् । मानसिंह ! त्वमपि स्वसैन्यं सज्जीकृत्य लाभपुरसामन्तमुपशमय, अहमपि देहलीपत्तने राज्यस्थानपरिवर्तनं विधाय अनुपदमेव सज्जितसैन्यः समेष्यामि ।

मन्त्री—महाराज ! कस्मादिदं राज्यस्थानपरिवर्तनं क्रियते ?

अक०—कदाचिद्विवृद्धः प्रताप आक्रामन्ननार्यमाचरेत् ।

मन्त्री—इदं तु नैव संभाव्यते, परमनिष्टसंभावनया पूर्वतस्तथा करणे न काचित्क्षतिः ।

( मानप्रभृतयो निष्क्रामन्ति । )

अक०—दौवारिक ! श्रान्तोऽस्मि विश्रान्तिस्थानमादेशय ।

दौवा०—इदो आगच्छुउ महाराश्रो ।

इत आगच्छतु महाराजः ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके

षष्ठोऽङ्कः ।



## सप्तमोऽङ्कः ।

( ततः प्रविशति मन्त्रिद्वितीयः परामृशन् प्रतापः । )

(पुनः प्रविशति अकवरसेनापतिपत्नीमादाय उपसेनापतिसहितो भिल्लराजः ।)

उपसेनापतिः—

याऽस्माकं करपञ्जरे निपतिता त्वद्वैरिसेनापतेः
कान्ता कान्तपदा शुधांशुवदना बन्धूकबिम्बाधरा ।
खेलच्चञ्चलखञ्जरीटनयना कुन्दावदातस्मिता
सेयं त्वच्चरणागता कृतिविधावाज्ञां समुद्वीक्षते ॥ १ ॥

प्रतापः—अलं परदारवर्णनेन ।

शिशोदियाकुलोद्भूतः परकान्तां न वीक्षते ।
परापवादसदृशं तद्दर्शनमुपेक्षते ॥ २ ॥

तस्मादधुनैव ससुतां ससखीमेनामस्याः स्वामिसविधं नयस्व।
मा स्वकीयजनविरहिता रात्रावेकाकिनी तिष्ठतु । यतः—

परपुरुषपरीतां निर्जने सञ्चरन्तीं
वहिरपि च रजन्यामन्यगेहे वसन्तीम् ।
वहुविधशपथैः स्वां साधुतां साधयन्ती-
मपि पिशुनजनाः स्त्रीमन्यथैवाक्षिपन्ति ॥ ३ ॥

उ० से०—यथाऽऽज्ञापयति देवः । ( निष्क्रान्तः । )

( ततः प्रविशति प्रधानसेनापतिः । )

प्रधानसेनापतिः—जयतु जयतु महाराजः ।

प्रता०—विजेतुं कियदवशिष्टम् ?

प्र० सेना०—न किञ्चिदवशिष्यते । चित्रपुरदुर्गं विहाय सर्वेष्वपि दुर्गेषु भवतामाधिपत्यं प्रतिष्ठितम् ।

मन्त्री—चित्रपुरदुर्गविजये कियत्कालं प्रतीक्षितव्यम् ?

सेना०—आज्ञासमनन्तरमेव वयं तदपि विजेष्यामहे, शौर्यशालिनी उत्साहवती चास्माकं सेना ।

किं म्लेच्छराजमधुनैव हरेम जित्वा
किं वाऽपि चित्रपुरमेव जयेम गत्वा ।
मानोद्धतं स्वजनमेव सदा द्विषन्तं
लुण्ठेम मानमथवोद्भटभीमसैन्यम् ॥ ४ ॥

प्रता०—सेनापते ! चित्रपुरदुर्गेऽस्मद्बान्धवः सगरस्तिष्ठतीत्यस्मदधिकारे एवेति मा तावच्चित्रपुरजयाय प्रयत्यताम् । म्लेच्छराजस्य चाभिमानं वयमेव चूर्णयिष्यामः । अतः केवलं मानस्य गर्वः प्रध्वंसयितव्यः, इत्यामेरं माननगरं लुण्ठ्यताम्, यदि मानः समुपलभ्येत तर्हि सोऽपि बद्ध्वाऽऽनीयताम् ।

प्र० सेना०—यथाऽऽज्ञापयति देवः । ( निष्क्रान्तः । )

( मन्त्रिसहितः प्रतापः परिक्रामति । )

( पटीक्षेपः )

( ततः प्रविशति मन्त्रिद्वितीयोऽकबरः । )

अक०—( सचिन्तम् ) मन्त्रिन् ! इदानीं प्रतापः कामपि दैवीं शक्तिमापन्नः प्रतिभाति ।

शंभुः स्वयं जनयति ध्वजिनीं किमस्य
तत्रैव वा गणमुपानयते स्वकीयम् ।
येन क्षणेन निहतो मम वीरसंघो
दुर्गाणि चाप्यधिकृतानि सपर्वतानि ॥ ५ ॥

मन्त्री—एवमेतत् । कथमन्यथैकेन कृतम् ।

( ततः प्रविशति अकबरसेनापतिः । )

सेना०—जयतु जयतु देवः ।

अक०—किं प्रतापेन दासीकृताः स्त्रियः ?

सेना०—शान्तं पापम् ! तेन तु अनुपदमेव ताः सर्वा अपि सबहुमानं प्रतिनिवर्तिताः । धन्योऽयमार्यः परमौदार्यसंपन्नः । किं बहुना-

परस्त्रियं यो मनसापि नेच्छते स एव दासीं नु विधास्यते कथम् ।
चराचरं स्वप्रभया प्रकाशयन् किमार्यमोत्पादयते तमस्ततिम् ॥६

सेना०—

न पक्षपातान्न रणाद्भिया वा वैराग्यतो वा न परिश्रमाद्वा ।
किं तु त्वदीयं हितमीक्षमाणः सन्धिं प्रतापेन समं समीहे ॥७॥

किञ्च—दैवीं महाशक्तिमसौ प्रपन्नो
विवर्द्धमानः स इहाभ्युपेयात् ।
क्रुद्धस्तदाऽऽक्रम्य यदाचरेत्त-
न्न वाच्यमेतत्परिभावनीयम् ॥ ८ ॥

मन्त्री—महाराज ! बाढमयं दैवीं शक्तिमापन्नः ।

यः प्रत्यर्थिविराडरण्यदहने प्रोद्यद्दवाग्नीयते
यः क्रूरारिगजेन्द्रवृन्दहनने क्रुध्यन्मृगेन्द्रायते ।
यः कौटिल्यकलातमिस्रहरणे भास्वत्प्रकाशायते
सोऽयं पूर्णबलः प्रतापनृपतिः शश्वद् जरीजृम्भ्यते ।९।

किञ्च—

यस्ते राज्यमतित्रसत्पृथुबलं तीक्ष्णासिनाऽचीच्छिदत्
यस्ते वित्तमजीहरत् युवभटं सैन्यं तथाऽदीदरत् ।
यस्ते भागमजीगलत्स धृतिमान् वीरः प्रतापस्त्वया
तूर्णं सन्धिवशेन शुद्धमनसा सम्प्रार्थनं शम्यताम् ।१०।

अक०—यथा युवयोः संमतम् । ( मसीं पत्रं चानाय्य सन्धिपत्रं लिखति । स्वकीयमुद्रयाऽङ्कितं विधाय प्रतापसविधे प्रेषयति । )

( पटीक्षेपः । )

( ततः प्रविशति कतिचित्स्वसामन्तसहितः प्रतापः । )

( वीणां वादयन्ती गायन्ती योगिनी च । )

योगिनी—

हर हर जय जय देव !
जय प्रताप ! जय भारतभूषण ! जय वसुधाधिप ! देव !
हर हर जय जय देव !
जय जय धर्ममार्गपरिरक्षक ! जय मर्यादाभूप !
जय शिशोदियावंशविभूषण ! जय हरिहरप्रतिरूप !
हर हर जय जय देव !
जय यवनाधिपमानविमर्दक ! जय जय विजयमहेश !
जय तुरुष्कसेनापतिमर्दक ! जय करवालसुरेश ! ॥ ११ ॥

( अत्रान्तरे प्रविशति शक्तिसिंहः । योगिनी वीणां वादयन्ती मौनमास्थिता । )

शक्ति०—ससैनिकं समायान्तं शाहवाजं समुद्धतम् ।
विनिहत्य महाराज ! शक्तिस्ते प्रणतः पदे ॥ १२ ॥

प्रता०—अहो भ्राता शक्तिसिंहः ! ( समुत्थाय तमालिङ्ग्य स्वसमीपे उपवेशयति । )

( पुनर्योगिनी गायति । )

हर हर जय जय देव !
जय प्रताप ! जय भारतभूषण ! जय वसुधाधिपदेव !
हर हर जय जय देव !
जय जय माननगरविध्वंसक ! जय राजकतारेश !
जय जय मानमानविच्छेदक ! जय मेवाडनरेश ! ॥१३॥

( ततः प्रविशति माननगर ( आमेर ) विध्वंसकः प्रताप-
सेनापतिः । योगिनी वीणां वादयन्ती मौनमास्थिता । )

सेना०—असावामेरलुण्टाको मानगर्वविमर्दनः ।
तव सेनापतिश्चन्द्रो वन्दते ते पदाम्बुजे ॥१४॥

( प्रणमति । )

प्रता०—साधु सेनापते ! साधु ! ( इति तत्पृष्ठमास्फाल्योपवेशयति । )

( पुनर्योगिनी गायति । )

हर हर जय जय देव !
जय प्रताप ! जय भारतभूषण ! जय वसुधाधिप ! देव !
जय सन्धये तुरुष्काभ्यर्थित ! जय सच्चरितदिनेश !
जय नरपते ! स्वतन्त्रधराधिप ! जय जय जितयवनेश ! ।१५।

( इति गायन्ती अन्तर्हिता । )

( ततः प्रविशति सन्धिपत्रमादाय अकबरदूतः । प्रतापपादयोर्विनि-
पत्य सन्धिपत्रं समर्पयति । प्रतापस्तदुद्वाच्य
सर्वान् श्रावयति । )

श्रीमत्सु श्रौतस्मार्तधर्मरक्षकेषु गोब्राह्मणप्रतिपालकेष्वार्यपति-
प्रतापेषु सप्रणयं प्रार्थयते ।

स्वतन्त्राः सर्वतः सन्तो भवन्तो मम मानिनः ।
पूज्याः सीमामनुल्लङ्घ्य शान्तिं कुर्वन्तु विश्वतः ॥१६॥

भवदीयः प्रियसुहृदकबरः ।

प्रता०—स्वीकृतस्ते सन्धिरिति म्लेच्छाधिपतिं संदिश । ( ततः सप्रणाम-
मकबरदूतो निष्क्रान्तः । )

भिल्लराजः—अच्चरियम् ! अच्चरियम् ! । एगलिङ्गप्पहावेण अम्हाणं
आश्चर्यम् ! आश्चर्यम् ! । एकलिङ्गप्रभावेणास्माकं
सव्वोऽवि मणोरहो जुगवदेव्व संपुण्णो जाओ । आमेरं
सर्वोऽपि मनोरथो युगपदेव संपूर्णो जातः । आमेरं

माणणअरं विलुण्टिय माणसीहगव्वो विचुण्णिओ ।
माननगरं विलुण्ठ्य मानसिंहगर्वो विचूर्णितः ।
आक्कमणमहिलसन्ती सव्वा चेव अगवरसेणा नासिआ ।
आक्रमणमभिलषन्ती सर्वा एव अकवरसेना नाशिता ।
अगवरो वि मानं चइत्ता महाराअस्स चरणम्मि निवडिओ ।
अकबरोऽपि मानं त्यक्त्वा महाराजस्य चरणे निपतितः ।

शक्ति०—अहो अस्या योगिन्या वाचि अनिर्वचनीया शक्तिर्विद्युदिव सर्वतो धमनीषु शौर्यशक्तिं संचारयति, त्वयि च परमां भक्तिमुत्पादयति।

प्रता०—एवमेतत् । सेयं तपोबलेनेमां शक्तिमापन्ना ।

( ततः प्रविशति कमण्डलुहस्तः समित्पाणिः शिष्यसहितः कश्चित्तपस्वी। )

( सर्वे प्रणमन्ति । )

तपस्वी—प्रताप ! साधु त्वयाऽऽर्यमर्यादा रक्षिता । म्लेच्छराजश्च नम्रीकृतः ।

आज्ञा तेऽखिलभूपमौलिमहिता भक्तिः स्थिरा शङ्करे
सौजन्यं परमं सुतः प्रणयवान् कान्ता मनोहारिणी ।
प्राज्यं राज्यमकण्टकं प्रकृतयो गाढानुरक्तास्त्वयि
स्तोत्रं सिन्धुपरात्परं किमपरं भूयः प्रियं कुर्महे ॥ १७ ॥

तथापि इदं भरतवाक्यमस्तु—

सर्वे सत्पथगामिनः शिवरताः स्वातन्त्र्यदेवप्रियाः
ब्रह्मण्या निजधर्मकर्मकुशला राष्ट्रानुगा मानिनः ।
विद्वांसः स्वकलत्रमात्रनिरता दक्षा दृढप्रत्यया
भूयासुर्वसुधाधिपा नयविदः पुण्ये पुनर्भारते ॥ १८ ॥

( इति भूयः पठति । श्लोकसमाप्तिसमनन्तरमेव पटीक्षेपः । )

इति श्रीविद्यावारिधिसर्वतन्त्रस्वतन्त्रमहामहोपाध्यायमथुराप्रसाददीक्षितकृतौ वीरप्रतापनाटके सप्तमोऽङ्कः समाप्तः ।

समाप्तं चेदं नाटकम् ।

## अथ ग्रन्थकर्तुः परिचयः—

षोडश्यां शतवत्सर्य्यां शिवराजपुराधिपैः ।
चिकीर्षितं विष्णुयागं श्रीकान्तो द्रष्टुमाययौ ॥ १ ॥
यज्ञे यज्ञाग्निनीतौ विकलतरलितान्मानुषान्प्रेक्ष्य धीरः
प्रोवाचेत्थं त्वयैवं किमिह विधिविधौ वाह्यवह्नेर्विधेयम् ।
आक्षिप्तस्तर्हि कार्यस्तव यदि महिमाऽभ्यन्तराग्निप्रसूतौ
हुं कृत्वा मन्त्रशक्त्याऽनलमधियजनं दीप्तिमन्तं निनाय ॥ २ ॥
अथ विदुषामनुरोधाद्राज्ञश्चाप्यनुनयादचीकरत ।
यज्ञं स्वयं च कृतवान् दीक्षितपदवीं ततः प्राप्तः ॥ ३ ॥
अद्वितीयमहिमा स बभूव कान्यकुब्जवरभूसुरमध्ये ।
तोषितः स्वकृतितो वरवर्णी सोऽपि चाशिषमदत्त ततोऽस्मै ॥ ४ ॥
भवत्कुले तिष्ठतु सर्वदा सती सरस्वती साधुपदा दृढास्पदा ।
विरोधमुत्सार्य तया च शाश्वतं न जातु पद्मा विजहातु ते कुलम् ॥ ५ ॥
भास्वद्भूरिप्रतापः सकलबुधगणेष्वग्रणीर्भूरिकीर्तो
राज्ञां मान्यो वरेण्यो हरिहरचरणस्तस्य वंशेऽजनिष्ट ।
तत्पुत्राः पञ्च जाता निगमनयविदस्ते च विद्वत्सु पूज्याः
सर्वे सिद्धान्तविज्ञाश्चरकविधिबुधा वैद्यवर्या बभूवुः ॥ ६ ॥
सकलमहीसुरमण्डलवर्यः शास्त्रार्थमर्मज्ञः ।
बदरीनाथो धीरो हरिहरपुत्रो भिषग्वरो जातः ॥ ७ ॥
तदात्मजोऽहं मथुराप्रसादः सुधियां मतः ।
तस्य मे विदुषां स्वान्ते कृतिर्विजयतामियम् ॥ ८ ॥
वह्न्यङ्कनवचन्द्रेऽब्दे वघाटे निर्मितं शुचौ ।
प्रतापनाटकमिदं दुर्गासिंहे प्रशासति ॥ ९ ॥